केचिद्वदन्ति यस्मिन् ग्रहो निरंशं करोति तल्लग्नम् ।
भवनं यातुरनिष्टं भयशोकोद्वेगदं यस्मात् ॥ १८ ॥

वृषवृश्चिककर्कटैर्नृणामनुकूलैरपि लग्नमाश्रितैः ।
गमनं प्रवदन्त्यशोभनं मुनयोऽन्यर्क्षसमाश्रितैरपि ॥ १९ ॥

वेशिर्विलग्नोपगतो यियासोर्विनापि यत्नात् कुरुते फलाप्तिम् ।
नौयानमिष्टं जलराशिलग्ने तदंशके चान्यगृहोदयेऽपि ॥ २० ॥

**इति बृहद्यात्रायां लग्नबलाध्यायोऽष्टमः ॥ ८ ॥**

---

ऊर्ध्वा तिर्यग्वानता स्याच्च होरा मुक्ता कान्ता नागतार्का क्रमेण ।
इत्येताः स्युर्जीवशर्मोपदेशो ज्ञेयो राशिर्ब्रह्मषण्डस्य पक्षे ॥ १ ॥

ऊर्ध्वा स्याद्या षट्चराद्येषु होरा भूयो भूयो मण्डले कैश्चिदुक्ता ।
राशौ राशौ प्राग्विलग्नोपयातैः द्रेक्काणैस्तु प्राह होरां वसिष्ठः ॥ २ ॥

सर्वं प्रमाणं मुनिचोदितत्वात् किं त्वत्र योज्यं दलमेव होरा ।
यस्मिन् सहस्रांशुरवस्थितोऽर्धे तिर्यङ्मुखी सा गणयेत्ततोऽन्याः ॥ ३ ॥

---

**Testimonia :**

19 *Daivajñavallabha* 15, 28 20c-d cited by Viṣṇuśarman on *VM* 12, 15 and by Govinda on *MO* 11, 46

3-4=*Daivajñavallabhā* 15, 30-31 4 Cited by Viṣṇuśarman on *MV* 12, 14

**Apparatus :**

18c गमने B 20a पे. विं° M यासो B, यि in marg. B² 20c दिनराशि° Viṣṇuśarman 2od वान्य° M Govinda °शहोदयेषु M Col. इति om. B इति महायात्रयां लग्ननिश्चयो नाम अष्टमोऽध्यायः M.

1a तीर्यक्कानता B, तिर्यग्वा न राशि ता M 1b मुक्तकान्ता M 1d °ब्रह्मगुप्तस्य M 2a ऊर्ध्वाद्याष्षट्चरष्टाद्येषु M 2b मण्डलैः M 2c-d° यातैस्तैः द्रेक्काणैः प्राह M 3a सर्वाः B °नोदितत्वात् *Daivajñavallabha* 3b किं त्वत्र होराबलमेव योग्यं *Daivajñavallabha* 3d ऽन्ये M



धत्ते वांछितकार्यमूर्ध्ववदना क्लेशाद्विना लग्नगा
क्लेशायासपरिक्षयांश्च कुरुते तिर्यङ्मुखी गच्छतः ।
सैन्यभ्रंशमधोमुखी प्रकुरुते कृच्छ्राद्गृहे चागमं
सर्वाः पुष्टफलप्रदाः स्वपतिना दृष्टा न पापग्रहैः ॥ ४ ॥

ग्रहदिवसफलं यदेव यातुस्तदखिलमेव करोति तस्य होरा ।
हिमसलिलसृजो विनाह कश्चिद्युवतिसमाश्रयरत्नदेति चान्द्री ॥ ५ ॥

द्रेक्काणाकारचेष्टागुणसदृशफलं योजयेद्वृद्धिहेतो-
र्द्रेक्काणे सौम्यरूपे कुसुमफलयुते रत्नभाण्डान्विते च ।
सौम्यैर्दृष्टे जयः स्यात् प्रहरणसहिते पापदृष्टे च भङ्गः
साग्नौ दाहोऽथ बन्धः सभुजगनिगले पाशयुक्ते च यातुः ॥ ६ ॥

नृपमूर्तिर्लग्नगते द्रेक्काणे मन्त्रिणो द्वितीये च ।
वैद्यपुरोहितसाम्वत्सरास्तृतीये परे भृत्याः ॥ ७ ॥

स्थानपराक्रमचिन्ता व्यापारपराक्रमौ चमूपबलम् ।
अभ्यवहार्यं शयनासने च तत्पंचसु क्रमशः ॥ ८ ॥

---

**Testimonia**

6 cited by Viṣṇuśarman on *VM* 12, 14 7-8b and 10-14 cited by Viṣṇuśarman on *VM* 12, 24 8-18 *Daivajñavallabha* 15, 12-21 and 23

**Apparatus:**

4a पापैर्विना M लग्नगैः M, लग्नभात् Viṣṇuśarman 4b °क्षयंच Viṣṇuśarman सन्यध्वंस° B सैन्यध्वंस Viṣṇuśarman 4d पुष्टिफल° B पृष्टफला M, पुष्पफल° Viṣṇuśarman °प्रदाः] यदा M 5d °युवति जनाश्रयणदेति चान्द्रिम् M 6b °भांडान्युते B, °भाण्डान्विते Viṣṇuśarman वा B 6c च] ऽत्र B 6d भङ्गः Viṣṇuśarman सभुजगनिगडे B, सनिगलभुजगे Viṣṇuśarman पापायुक्ते B पापयुक्ते Viṣṇuśarman 7a °गतो M Viṣṇuśarman 7b द्रेक्काणे om. M Viṣṇuśarman 7c वैद्यः पुरत° साम्वत्सर° Viṣṇuśarman 7d परे om. B 8b °पराक्रमे चमू 8b °पबलं to 9b °राजा om. Viṣṇuśarman परतो व्यवहार-नृपसैन्ये *Daivajñavallabha* 8c शनासने B

यानासनशय्यावाहनानि दशमेऽपरेऽन्नपानानि ।
वाहनयोधाः परतस्त्रयोदशे भवति युवराजा ॥ ९ ॥

ज्ञेयं बलं प्रयातुर्मन्त्रस्य विनिश्चयश्च तत्परतः ।
परतः पञ्चदशाद्ये द्रेक्काणचतुष्टये रिपवः ॥ १० ॥

एकोनविंशके सैनिकाम्बुशयने धनानि परतोऽर्थाः ।
परतोऽस्य दण्डनेता सैम्यस्योपद्रवः परतः ॥ ११ ॥

सेनाछिंद्र तस्मात् सेनानेता भवेच्चतुर्विंशे ।
सैन्यारोग्यं सैन्यं चतुष्पदं च क्रमात् त्रितये ॥ १२ ॥

कार्यं कोशः फलसिद्ध्यस्त्रये भूमिपास्त्रये परतः ।
धर्मक्रियाथ योधार्चनं च यात्रासमाप्तिश्च ॥ १३ ॥

इत्युदयाद्या भावा द्रेक्काणैर्ये मया समुद्दिष्टाः ।
सदसत्फलमादेश्यं सदसद्युतवीक्षणात्तेषाम् ॥ १४ ॥

नवभागे तिग्मांशोर्वाहननाशो विलग्नसंप्राप्ते ।
कृच्छ्रात् स्वगृहागमनं प्रतापमृदुता च चन्द्रांशे ॥ १५ ॥

---

**Testimonia**

15-18 Cited by Viṣṇuśarman on *VM* 12, 14

**Apparatus**

9b °हनादीनि M परेण M, परतो *Daivajñavallabhā* ऽन्न° om. M 9d भवति] ऽपि *Daivajñavallabhā* युवराजः *Daivajñavallabhā* 10a बलं ज्ञेयं Viṣṇuśarman 10b °मैंत्रस्य B, °यंज्ञस्य M निश्चयश्च *Daivajñavallabhā* 10-c परतः om. M, ज्ञेयाः Viṣṇuśarman 11a-b °विंशतितमे सैनिकशयने *Daiva jñavallabhā* 11c ऽस्य]ऽन्न° M 11d दण्डस्यो° Viṣṇuśarman 12c सेनारोग्यं M Viṣṇuśarman *Daivajñavallabhā* 12d क्रमात्तच्च Viṣṇuśarman 13a त्रये कार्यं Viṣṇuśarman 13a-b फलसिद्धिश्च Viṣṇuśarman 13b भूभुज° *Daivajñavallabha* 13d च om. B 14b समुदिष्टाः B, विनिर्दिष्टाः M, दिष्टाः *Daivajñavallabhā* 14d सदसद्ग्रह M, सदद्युसर्ति Viṣṇuśarman 15a नवमांशे *Daivajñavallabhā* 15c स्वसद्दागमन M



कौजेऽग्निभयं बौधे मित्रप्राप्तिर्धनागमो जैवे ।
भोगविवृद्धिः शौक्रे भृत्यविनाशो रविसुतांशे ॥ १६ ॥

यदुदयति फलं ग्रहे प्रदिष्टं जनयति तस्य नवांशको विलग्ने ।
शुभभवननवांशे सहायो रिपुबलभागमुपैति यातुरत्र ॥ १७ ॥

यत् प्रोक्तं राश्युदये द्वादशभागेऽपि तत् फलं वाच्यम् ।
यच्च नवांशकविहितं त्रिंशांशस्योदये तत् स्यात् ॥ १८ ॥

**इति बृहद्यात्रायां लग्नभेदाध्यायो नवमः ॥ ९ ॥**

---

सन्तापशोकगदविघ्नकृदुद्गमेऽर्कः कल्याणमानबलहार्दिहरो द्वितीये ।
हेमान्नविद्रुममणिक्षितिदस्तृतीये वैराग्यबन्धुकलहारतिदश्चतुर्थे ॥ १ ॥
पुत्रापदं सुतगृहेऽध्वनि चार्थसिद्धिं षष्ठेऽभिवांछितफलाप्तिमरिक्षयं च ।
द्यूने कलत्रकलहं धनसंक्षयं च मृत्युं करोति निधने सविता रुजं च ॥२॥
धर्मं हिनस्ति नवमे सवितार्थदश्च हत्वा वियत्यविदितं श्रमकर्मदाता ।
रत्नागमं सुबहु लाभगतः करोति कृत्वा व्ययं व्ययगतः कुरुतेऽर्थमल्पम् ॥३॥

---

16b मित्राप्तिस्सद्धनागमो M, मित्राप्तिधनागमा Viṣṇuśarman 17a गृहे B, ग्रहो° M, om. *Daivajñavallabhā* °पदिष्टं M 17b नवांशके M Viṣṇuśarman 17c सहायं Viṣṇuśarman *Daivajñavallabhā* 17d °भाग उपैति B *Daivajñavallabhā* यातुरर्था M Viṣṇuśarman (,) यातुरर्थात् *Daivajña-vallabhā* after 17 *Daivajñavallabhā* adds:

शुभर्क्षे तन्नवांशे च [illegible]ति मनुजेश्वरः । शत्रुबलान्नेता साहाय्यमुपगच्छति ॥

Col: इति om. B इति महायात्रायां द्रेक्काणविनिश्चयो नाम नवमोऽध्यायः M

**Testimonia**

1-19 Cited by Viṣṇuśarman on *VM* 12, 25

**Apparatus**

Verses 1-20 (with the exception of 6c; 8c; 10d; 11a; 11d; and 12c) om. M, which has: सन्तापइत्यादि जिगीषोरित्यन्तं प्रश्नमार्गोक्तमेव 1b कल्पार्थ° B °हार्द° Viṣṇuśarman द्वितीये om. Viṣṇuśarman 1c भौमान्न° Viṣṇuśarman 2a सुतगतो Viṣṇuśarman चार्थलाभः Viṣṇuśarman 2b °क्षयाय Viṣṇuśarman. 3b हित्वा B 3c तु बहु Viṣṇuśarman 3d व्ययं om. B ऽर्थमन्यम् Viṣṇuśarman

लग्ने शशी कलहशोककरो न पूर्णः स्त्रीवाजिरत्नसुहृदात्मजदः कुटुम्बे ।
दुश्चिक्यगो युवतिरत्नधनप्रदाता बन्ध्वासिदः सुहृदि तत्क्षयदश्च कृष्णे ॥४॥

अर्थप्रदस्तनयगः सुतशोककृच्च मित्रारितां प्रकुरुते न सुखं च षष्ठे ।
अस्तेऽर्थभूयुवतिदोऽर्थविनाशदोऽणुश्चन्द्रोऽष्टमे निधनशोककरः प्रयातुः ॥ ५ ॥

प्रत्येति चाशु नवमे कुरुते च कार्यं क्षीणे क्षयो वियति वृद्धिरतोऽन्यथास्थे ।
ऐश्वर्यसौख्यधनलाभमुपैति लाभे क्लेशक्षयव्ययभयानि च रिष्फयाते ॥ ६ ॥

लग्ने विषाग्निरुधिरागमशस्त्रबाधा भिन्द्याद्बलं धनगतोऽर्थकरश्च पश्चात् ।
दुश्चिक्यगो युवतिरत्नधनाम्बराप्तिं बन्धुक्षयारिभयदो हिबुके महीजः ॥ ७ ॥

पुत्रापदं क्षितिसुतः कुरुते सुतस्थः शत्रुप्रणाशमचिरादरिगः करोति ।
अर्थक्षयारतिगदार्दनमस्तसंस्थो बन्धार्थहानिगदमृत्युभयानि मृत्यौ ॥ ८ ॥

धर्मं न साधयति धर्मगतो महीजः शस्तोऽम्बरे न शुभदः कथितोऽपरैश्च ।
लाभेऽर्थसिद्धिविभवागमदः प्रयातुर्वित्तक्षयं बहु करोति गतश्च रिष्फे ॥ ९ ॥

लग्ने कीर्तिसुखार्थबुद्धिविजयान् प्राप्नोति वित्तं धने
सोत्कण्ठं स विरागमेति सहजे कामान् लभेताखिलान् ।
पाताले शयनान्नपानविभवान् पुत्रागमं पञ्चमे
षष्ठे यात्यरिबाध्यतां शशिसुते क्लेशश्च यातुर्भवेत् ॥ १० ॥

---

Apparatus:

4a °शोकहरो Viṣṇuśarman 4b स्त्रीवर्जं° B 4c दुश्चित्कगो Viṣṇuśarman 4d बंध्या° B, वध्वा° Viṣṇuśarman 5a अर्थक्षयस्त्रयगतः Viṣṇuśarman °शोकृत्र B 5c-d ऽनुश्चन्द्रो B 6a गशु B, चा written above $B^2$, नाशु Viṣṇuśarman ऽतिकार्यं Viṣṇuśarman 6b क्षीणो व्ययं Viṣṇuśarman वृद्धिकरोऽन्यथास्थः Viṣṇuśarman 6d रिषं याते B 7b ऽर्थगतश्च Viṣṇuśarman 7c दुश्चित्कगो Viṣṇuśarman °धनाम्बप्राप्तिं B 8b °दभगः B 8c अर्थक्षयारतिग M °गदाधन° Viṣṇuśarman 8d बन्धार्थनाशभयमृत्युकरश्च Viṣṇuśarman 9b कंदतो B 9c लाभार्थ° Viṣṇuśarman 10a लगने तिसुखा° B °बुधि° B, °मित्र° Viṣṇuśarman 10b उत्कं श्चाथ सर्वराग° B, ठं written above $B^2$ कामिन् B कार्यं Viṣṇuśarman °खिलम् Viṣṇuśarman 10c पत्राले स्वाय° B 10d षष्ठे यात्यरिबाध्य M यात्बारिबाधितां B, तु and ध्य written above $B^2$



जायास्थे प्रवराङ्गनाम्बरधनप्राप्तिर्बुधेऽर्काच्च्युते
केचित् क्लेशमुशन्ति नैधनगते शंसन्ति केचिच्छुभम् ।
धर्मे धर्मविवृद्धिरम्बरगते सिद्धिर्भवेदीप्सिता
विद्यार्थाप्तिरयत्नतश्च परतो रिष्फे च वाच्यो व्ययः ॥ ११ ॥

कीर्तिर्लग्नेऽथार्थसिद्धिर्द्वितीये दुश्चिक्यस्थे क्षुच्छ्रमार्तिः सुरेज्ये ।
पातालस्थे धर्मतत्वाभिमाना कार्यं सिध्यत्यात्मजस्थेऽप्यसाध्यम् ॥ १२ ॥

षष्ठे जीवे शत्रुरायाति वश्यं केचित् प्राहुर्वश्यतां याति शत्रोः ।
विन्दन्त्यस्तेऽरिष्टयोषायशांसि मृत्यौ प्राणान् हन्त्यथान्ये जगुर्न ॥ १३ ॥

पुत्रोत्पत्तिर्धर्मसिद्धिश्च धर्मे जीवे कर्मण्यर्थसिद्धिर्यशश्च ।
लाभे कार्यं वाञ्छितं याति सिद्धिः रिष्फे प्राप्ते क्लिश्यतेऽनेकदुःखैः ॥ १४ ॥

वेश्यार्थाम्बरमाल्यभोजनसुखप्राप्तिर्विलग्ने भृगौ
लाभोऽर्थे सहजे न सीदति गतः प्राप्नोति श्रेष्ठां श्रुतिम् ।
पाताले सुहृदागमः सुतगृहे स्थानार्थमानागमः
षष्ठे शत्रुपराभवारतिशुचं स्थानेऽन्यथा तज्जगुः ॥ १५ ॥

दत्त्वा स्त्रीधनमस्तगः स्वविषयव्युच्छित्तिदो भार्गवः
कार्यं साधयतेऽष्टमेऽथ नवमे क्षिप्रं करोतीप्सितम् ।
यातुः कर्मगतः प्रभूतधनदो लाभे जयार्थप्रदो
व्यर्थं द्वादशगो व्ययं प्रकुरुते शस्तोऽपरैर्द्वादशे ॥ १६ ॥

---

Apparatus

11a °बुधेऽर्कच्युते M ऽर्कात्सुते Viṣṇuśarman 11b लग्नमु° Viṣṇuśarman 11d °प्तिर्यत्नतश्च B रिपे च विद्या व्ययः M 12a ऽर्थस्य Viṣṇuśarman 12b दुश्चित्कस्थे Viṣṇuśarman षुश्रमार्तिः B, क्षन् written above $B^2$ सुरेड्ये Viṣṇuśarman 12c सर्वदासत्तिकामा Viṣṇuśarman 12d सिध्यत्वा° B 13a वृद्धिं Viṣṇuśarman 13b शत्रुः Viṣṇuśarman 13c विन्दन्तेऽस्ते Viṣṇuśarman ऋध्ययोषा° B, रिष्ट written above $B^2$, ऽरिस्त्वयोषा° Viṣṇuśarman व्यश्यासि B 14a °वृद्धिश्च Viṣṇuśarman 14c कार्यं] जीवे Viṣṇuśarman वाञ्छितायाति Viṣṇuśarman 15a °वश्या° Viṣṇuśarman 15b गतः] चातः B चैषां श्रुतिः Viṣṇuśarman 15c °मानान् ययः B 15d °रतिम्पुच B छुन्येऽथातो जगुः B 16b च Viṣṇuśarman 16d द्वादशजन्मगोऽत्र कुरुते Viṣṇuśarman

बन्धं वधं चार्कसुते विलग्ने धनेऽर्थहानिं लभते शुभं च ।
शत्रोर्बलं हन्ति गतस्तृतीये चतुर्थगो बन्धुभयं परेभ्य: ॥ १७ ॥

नार्थस्य सिद्धि: सुतगेऽर्कपुत्रे रिपून् रिपुस्थे सृजयत्ययत्नात् ।
उत्साहभङ्गोऽक्षिरुजश्च दारे विषाग्निशस्त्रादिवधोऽष्टमस्थे ॥ १८ ॥

धर्मे न धर्मं लभते सुखञ्च यानावृतिं कर्मफलं च स्वस्थे ।
एकादशस्थे जयवित्तलाभान् मन्देऽन्त्यगे नार्थमुपैति याता ॥ १९ ॥

प्रायो जगु: सहजशत्रुदशायसंस्था:
पापा: शुभा: सवितृजं परिहृत्य खस्थन् ।
सर्वत्रगा: शुभफलं जनयन्ति सौम्या-
स्त्यक्त्वास्तसंस्थममरारिगुरुं जिगीषो: ॥ २० ॥

केचित् प्राहुररिव्ययास्तसहजस्थानानि हित्वा भृगु:
श्रेष्ठश्चन्द्रसुतोऽन्त्यधर्मसहजद्यूनस्थितो नेतर: ।
चन्द्रो लाभसुतार्थधर्मसहजव्योमस्थित: पूजितो
जीव: सर्वगतो मणित्थकथितो नेष्टोऽन्त्यषट्स्त्र्याश्रित: ॥ २१ ॥

एकीयपक्षेऽपि हि कैश्चिदुक्तो भृगु: शुभोऽन्त्यात्मजलाभवर्जम् ।
चन्द्रस्त्रिषष्ठायदशास्तसंस्थो बुधोऽस्तलग्नायसुहृद्व्ययस्थ: ॥ २२ ॥

**इति बृहद्यात्रायां ग्रहस्थानबलाध्यायो दशम: ॥ १० ॥**

---

**Testimonia**

20 Cited by Govinda on *MC* 11,56

**Apparatus**

17b लभते कुरुते घु गणतो B, च written above $B^2$ 17d बन्धवधं Viṣṇuśarman 18b रिपुं Viṣṇuśarman रिपौ संप्रजयत्य Viṣṇuśarman 18c ऽर्कसुते च कामे Viṣṇuśarman 18d °शस्त्रारिवधो Viṣṇuśarman 19b न निश्रुतिं B 19c °लाभो Viṣṇuśarman 19d नाशमु° Viṣṇuśarman 20b परिदु: खस्थम् B 20d जिगीषो: M, जिगीषु: B, यियासो: Govinda 21a °रिव्यास्त°B 21d मणिथिकंदतो B, मणिन्धकथितो M °षटस्त्रियाश्रित B, °षट्स्त्रिस्थित: M 22a °दुक्ते M, °दुक्तं B 22c चन्द्रस्तु M °दशत्रिसंस्थो M 22d बुधस्तु M col. इति om. B इति महायात्रायां ग्रहभावशुद्धि: दशमोऽध्याय: M



सौम्यासौम्येष्वेतल्लग्नादिस्थेषु यत् फलं प्रोक्तम् ।
तत्समकालगतानां फलवैषम्यादनेकान्तम् ॥ १ ॥

होराविदो जगुरिदं सुतावबलो दशाधिपारिश्च ।
अशुभफलदश्चासाम्प्रतमुदये सौम्योऽपि नेष्टफल: ॥ २ ॥

साम्प्रतं शुभद: सुतौ बलान्वितो यो दशाधि(प)मित्रं च ।
पापोऽपि शुभफल: स्याच्छ्लोक: शास्त्रोदितश्चात्र ॥ ३ ॥

सौम्योऽप्यतीवचिरभाविफलो न योज्य:
पापोऽप्यसाम्प्रतफलो रिपुनिर्जितश्च ।
पाकाधिपो ऽऽत्मसदनाष्टकवर्गशुद्ध:
स्वल्पोऽफलश्च दिनभांशविधिस्तथा स्यात् ॥ ४ ॥

सौम्यं दशाधिपं लग्नसंस्थमिच्छन्ति केचिदाचार्या: ।
पापं चोपचयस्थं न विलग्ने तत्र च श्लोकौ ॥ ५ ॥

सौम्यग्रहेषु लग्नेषु शुभमेकान्तनिश्चितम् ।
पापग्रहोदये यातुरसंशयमशोभनम् ॥ ६ ॥

तस्मात् क्रूरं दशानाथं यातुर्वीर्यगुणान्वितम् ।
कुर्यादुपचयर्क्षेषु न विलग्ने कथंचन ॥ ७ ॥

तच्च विरुद्धं तेषां कथमन्यदशासु दास्यते स्वफलम् ।
एवं फलस्य नाशो व्रजति सर्वस्य फललि(ली)प्सो: ॥ ८ ॥

तस्मान्नैकान्तोऽयं जातकमवलोक्य निर्दिशेत् सदसत् ।
श्लोकौ वृत्तं भेदं प्राह मणित्थो वसिष्ठश्च ॥ ९ ॥

---

**Apparatus**

Id °नेकात्व M 2b °वब° om. M 2c-d °दस्त्विदानीमु° M 2d सौमे B 3a सांप्रतफऽद: M 3b दशावतेर्बन्धु: M 3c पि स शुभद: B 4a °प्यतितरिर° B, प्यतीव written above $B^2$, प्यतीतचिर° M °फलेन M 4c पाकाधिपा B M, पा written above का $B^2$ सुहृदनष्टक° B 4d स्वल्पोपलश्च M 5a दशाधिफललग्न° M 5d श्लोका: M 6a °ग्रहेऽष्टलग्ने M 6b °निश्चयं M 8b स फलं B 8c फलस्थाने M 8d व्रजति हि सर्वत्र M फललिप्सो: B M 9c चैमौ M 9d मनिथो वसिष्ठश्च B, वसिष्ठो मणिसश्च M

रक्षका वर्धकाश्चैव ये स्युर्जन्मनि नायकाः ।
तान् पापानपि निःशङ्को यात्रालग्नेषु योजयेत् ॥ १० ॥

शुभाशुभफला योगा जातके येऽप्युदाहृताः ।
तान् सर्वानवलोक्यैव प्रयाणेष्वपि योजयेत् ॥ ११ ॥

होरागतः स्वभवने यदि सूर्यपुत्रो मेषोपगोऽवनिसुतः स्वगृहे शशाङ्कः ।
शुक्रस्तुलाधरगतो मिथुने बुधश्च सिंहे रविर्यदि च पार्थिवजन्म विद्यात् ॥ १२ ॥

जन्मसमये शशाङ्कोदयोपचयसंस्थिता ग्रहाः केचित् ।
ते सर्वे नानाख्या क्रूराः सौम्यैः समाश्चिन्त्याः ॥ १३ ॥

यो यस्य दशमगृहगः स तस्य वश्यस्तु भवति नियमेन ।
यश्चाथ पणफरस्थः स भवति रक्षोपगस्तद्वत् ॥ १४ ॥

उपचयगृहोपयाताः परस्परं कीर्तितास्तु तानसमाः ।
आदौ प्रकीर्णकाध्याये चोदिताः कारकाश्च ॥ १५ ॥

जन्मेश्वरलग्नपयोर्यः शत्रुर्लग्नगः स सौम्योऽपि ।
कुरुते देहविपत्तिं क्रूरोऽपि शुभं तयोर्मित्रम् ॥ १६ ॥

भवेत्त यः कारकतानसंज्ञः स्वजन्मलग्नाधिपयोः शुभोऽपि ।
करोति लग्नोपगतः स यातुर्भयं विनाशं च बहुप्रकारम् ॥ १७ ॥

Tetimonia

10 Cited by Viṣṇuśarman on *VM* 12, 31-37

Apparatus

10a रजका Viṣṇuśarman 10b यस्य जन्मनि याचकाः Viṣṇuśarman 10c पापान् पथि Viṣṇuśarman 11a योज्या M 11b तर्कें च उदाहृताः M 11c तान् यथायोग पुरुष B. 12d °र्यदि गोर्दवजन्म B in M the order of verses is: 12, 15, 13, 16-20, 14, 21 13a-b शशाङ्कदजेपि पचये B, शशाङ्कोदुपचय M 13b संस्था ग्रहाश्रये केचित् M 14a दशमसंस्थः M 14b वश्योपगश्च नियमेन M 14c यत्स्यात्पणपरसंस्थः M पताफरस्थ B, णा written above ता $B^2$ 14d °स्तस्य B 15a-b उपचयपरस्परस्थास्तानाख्याः स प्रकीर्त्यन्ते M 15d °योऽग्रदिताः M काख्याश्च B, का written above ख्या $B^2$ 16c देहविपत्तिं कुरुते M 16d शुभस्तयोर्जित्रम् M 17a कारकातानसंज्ञा B °संस्थः M 17d च om B



पापोऽपि लग्नोपगतो नराणां शुभप्रदः कारकतानसंज्ञः ।
तस्मात् प्रयत्नादिदमेव चिन्त्यं यियासतां कारकतानयातम् ॥ १८ ॥

एकोऽपि वक्रोपगतो नराणां शुभोऽशुभो वापि चतुष्टयस्थः ।
वर्गोऽपि वास्योदयगो विनाशं बहुप्रकारं कुरुतेऽध्वगानाम् ॥ १९ ॥

स्वसुतस्थाने सूर्यः स्त्रीजनरत्नप्रमोददो लग्ने ।
अवशेषस्थानगतो वधबन्धोद्वेगदः क्षिप्रम् ॥ २० ॥

उडुपतिरुदयं प्राप्तः सर्वस्थानोपगः प्रयातॄणाम् ।
कुरुते रिपुप्रवृद्धिं दीप्तिविनाशं विघातं च ॥ २१ ॥

स्थानेऽर्कसुतस्य कुजो लग्नस्थो रिपुविनाशजयदाता ।
शेषस्थानोपगतः क्षितिसुतो रत्नार्थनाशकरः ॥ २२ ॥

रविशशिभौमस्थानेष्वनर्थदो लग्नगः शशाङ्कसुतः ।
भृगुसुतगुरुमन्दानामभिषेकजयार्थदीप्तिकरः ॥ २३ ॥

जीवो भृगुचन्द्रमसोः स्थाने धनयोधनाशकः प्रोक्तः ।
तत्परिशेषस्थानेष्ववनिसुहृद्वित्तजयदाता ॥ २४ ॥

सौम्यस्थाने शुक्रो बलहानिकरोऽर्थदोऽरिहन्ता च ।
स्थाने परिशेषाणामनिलज्वरशत्रुकोपकरः ॥ २५ ॥

Testimonia :

19 Cited by Govinda on *MC* 11,38

Apparatus :

18b °संस्थः M 18d °याताः M 19a नृपाणां M 19d च मानं B verse 19 is numbered 18 ; 20 not numbered ; 21-30 numbered 19-28; 31 not numbered; 32-38 numbered 29-35 in B 20a स्वसुस्थाने सू M 20b स्त्रीजनरक्षप्रामोददो B, स्त्रीरत्नजयप्रमोददो M 20d बन्धुवयोद्वेगदः प्रोक्तम् M 21c-d कुरुते विवृद्धिदीप्त्योर्विनाशमाज्ञाविधातं च M 22b ऽरिप्रणाशं° M 22c-d शेषस्थानोपगतो मृगुसुतगु (cf. 23c) शकरः M (क्षितिसुतोरत्नार्थना om.) 22d क्षितिसुत° B, जः written above ति $B^2$ 24a बुधचन्द्र° M 24b °नाशकृत् M 24d °सुहृदवित्जय° B, °सुहृद्वित्तभ्रन° M 25b °हर्दिकरो B र्थदु B 25d °मग्निज्वर° M

अर्कस्थाने मन्दो लग्नस्थः प्रीतिसौख्यलाभकरः ।
नेष्टोऽन्यस्थानस्थः प्रतापबलमानहानिकरः ॥ २६ ॥

सवितृतनयः स्वस्थानस्थो धनाङ्गविनाशकृत्
तुहिमकिरणःस्त्रीरत्नाप्तिं नरेश्वरतां रविः ।
अवनितनयः सैन्यक्षोभं प्रियश्रवणं बुधः
सुरगुरुस्थो भोगप्राप्तिं करोति जयं सितः ॥ २७ ॥

योऽस्तं यात्युदयं वा दक्षिणमार्गस्थितः सहस्रांशोः ।
कुरुते ग्रहः सलग्ने योधधनाङ्गक्षयं यातुः ॥ २८ ॥

तिग्मकरस्योत्तरतो दर्शनमायाति यो ग्रहोऽस्तं वा ।
मध्ये तु वा स लग्ने यातुः कुसुमाम्बराशनदः ॥ २९ ॥

नियतगतिद्युतिवर्णप्रमाणवैकृत्यमुच्यते विकृतिः ।
विकृतिस्थो लग्नगतो न शुभःशुभदः स्वभवनस्थः ॥ ३० ॥

याम्ये तमो ज्ञः श्रवणे रविस्तु जातो विशाखासु सितश्च पुष्ये ।
पौष्णाप्यभाग्योरगकृत्तिकासु मन्दारवागीशशिरवीन्दुजन्मा ॥ ३१ ॥

त्रिविधोत्पाताभिहतं बलवद्ग्रहपीडितं च यस्यर्क्षम् ।
यात्रायां लग्नगतं सं वर्जनीयोऽनुकूलोऽपि ॥ ३२ ॥

पाकेश्वराधिमित्रे तद्वर्गे वा विलग्नगे यातुः ।
स्वयमरिरुपैति वश्यं प्रणतशिराः सार्वभौमोऽपि ॥ ३३ ॥

Apparatus :

26b प्रीति om. M 26c नेष्टो B 26d प्रताबलवानहार्दिहर: B 27b स्थिरत्नाप्तिं B नरे स्वतां रवि हि B 27c सेन्यक्षोद्र B, भा in marg. B², सैन्यामोदं M प्रियाश्रवणं B 27d सुरगुरुल...भोग°M 28c गृह: B 28d °धनगं क्षयं B, °धनां क्षयं M 29b ग्रहस्तं B 29c मधेन M 29d कुस्मांबराणंनद: B, कुंसुमाशनाम्बुद: M 30a नियति° B 30d शुभद: शुभावस्थ: B 31a तमोजतश्श्रवणे M 31b विसाखेषु B 31c पूषाप्य° M 32a °भिहितं M 32b °वीक्षितं M 32c यात्रां लग्नत: M 32d सर्वजनीयो M 33a-b °रादिमित्रे भवने तद्वद्वि-लग्नगे M 33c °रिरुगैति B 33d °शरा: B



पाकेश्वरारिलग्ने वर्गे वा तस्य भूपतिर्गच्छन् ।
विनिहतशूरनराश्वः शत्रोरायाति वश्यत्वम् ॥ ३४ ॥

मूर्त्यर्थयोधवाहनमन्त्र्यरिमार्गनैधनमनांसि ।
कर्मागमव्ययाश्चोदयादयः कीर्तिता भावाः ॥ ३५ ॥

यात्राफलं चतुर्थे जामित्रे शत्रवः प्रमादश्च ।
शुभपापग्रहयोगाच्छुभाशुभं निर्दिशेदेषाम् ॥ ३६ ॥

सत्याचार्यस्य मते विबलः शस्तः शशी प्रयाणेषु ।
दिग्वीर्योनः केवलमिन्दुः शस्त इति जगुरन्ये ॥ ३७ ॥

यदेव यस्योदयसंस्थितस्य फलं प्रयाणे सदसत् प्रदिष्टम् ।
तदेव तस्याखिलमाहि यातुर्ग्रहस्य वर्गे च विलग्नसंस्थे ॥ ३८ ॥

इति बृहद्यात्रायामुत्सर्गापवादाध्याय एकादशः ॥ ११ ॥

---

व्यसनं प्राप्नो(ति) महद् व्यतिपाते निर्गतोऽथवा मृत्युम् ।
वैधृतिगमनेऽप्येवं त्र्यहस्पृशि समुपदिशन्त्येव ॥ १ ॥

नावमरात्रे यायाद्दोषस्तत्राधिमासके व्यसनम् ।
ऋत्वयनयुगस्याप्तौ न विजयकाङ्क्षी नृपः प्रवसेत् ॥ २ ॥

स्वर्क्षेशदशाधिपयोर्मित्रोदासीनशत्रुभांशभवाः ।
तत्पाकभुजश्चोक्ता विजिगीषोर्मित्रमध्यरिपवः ॥ ३ ॥

Apparatus:

34b वर्गे] भवने M 34c विहतश्रमो निराश: M 35a पूर्ण्यर्थ° M °वाह्यानि B 35c कर्मामसच्चिवा° B 36d °शेत्तेषु M 37b ऽपि बल: M 38b प्रमाने B प्रविष्टं B Col. इति om. B

इति महायात्रायां अपवाद एकादशोऽध्याय: M

Chapter 12 omitted M 1a प्राप्तो B 1c त्येवं B 1d त्रिहस्पृशि B, त्र्य written above हृ B² 3d °मध्यपा: है B, रा written above पा B²

रिक्तानिष्टदशोऽरिर्नियमाद्विजिगीषुणा समुच्छेद्यः ।
अवरोहिदशः पीड्यः कर्षयितव्यस्तथा रोही ॥ ४ ॥

न सदृशदशोऽभियोज्यः सन्धानं तेन भूपतेर्व्यासम् ।
अशुभैष्यासन्नदशः शुभैष्यपाकेन सन्दध्यात् ॥ ५ ॥

श्रेयान् विपर्यये विग्रहस्तथारोहिण्यशुभैष्यदशः ।
आसीत यदा शत्रुः शुभैष्यपाके विदूरस्थः ॥ ६ ॥

आरोहिशुभैष्यदशः पाकपतौ बल्युते च भूपालः ।
यायात्तद्विपरीतं द्वैधीभावं तु मिश्रदशः ॥ ७ ॥

रिक्तोपहतदशायां जन्मोदयनाथशत्रुपाके च ।
स्वदशेशकारकदशः संश्रयणीयो नराधिपतिः ॥ ८ ॥

उपचयकर्तुर्व्रजेद्दिशं बलवति कण्टकगे च दिक्पतौ ।
मनसापि न दिग्बलान्विते दिगधिपतौ च ललाटसंस्थिते ॥ ९ ॥

जन्मोदयपौ बलान्वितावुपचयकण्टकगौ शुभप्रदौ ।
क्रूरावपि नित्यमेव तौ सौम्यैरेव समावुदाहृतौ ॥ १० ॥

स्वदशाधिपजन्मलग्नपाः सन्ध्यार्कोपगता न शोभनाः ।
परिहृत्य सितार्कनन्दनौ मध्यास्तिग्मकराद्विनिःसृताः ॥ ११ ॥

---

Testimonia:

4-8 and 10 cited by Viṣṇuśarman on *VM* 12, 1 9a-b and 13 cited by Viṣṇuśarman on *VM* 12, 11 9c-d cited by Utpala on *YY* 5, 5 10a-b cited by Viṣṇuśarman on *VM* 12, 12

Apparatus:

4a-b रिक्तारिष्टदशानिर्णयमद्वि° Viṣṇuśarman 4d कर्षैत° B, यि written above त B², कर्शयित° Viṣṇuśarman 5b °न्यय्यिम् Viṣṇuśarman 5c अशुभैश्वासन्न° B 5d शुभैश्वपाकेन B 6a विपर्यें B 6a-b ऽपि ग्रहैस्तथारोहिशुभैष्यदश Viṣṇuśarman 6b °रोहिणि शुभैस्वदशः B 6c शत्रोः Viṣṇuśarman 6d ऽपि दूरस्थः Viṣṇuśarman 7b पाणिपतौ Viṣṇuśarman 7d मित्रदशा Viṣṇuśarman 8b °मोद° illegible B 8c स्वदशेशतरेकदशा Viṣṇuśarman 8d नरेन्द्रपतिः Viṣṇuśarman 10a बलहीनौ Viṣṇuśarman on *VM* 12, 12



परस्परं सौरिकुजौ रवीन्दू त्रिकोणगौ भार्गवलोहितौ च ।
फलं यदुक्तं तदशेषमेव विनाश्य पश्चात् स्वदिशं नयन्ताम् ॥ १२ ॥

रिपुदिवसो यस्य भवेत् सौम्योऽपि स लग्नगो न शुभदाता ।
पापोऽपीष्टं जनयति मित्रं स्वदिने विलग्नस्थः ॥ १३ ॥

बलिनः कण्टकसंस्था वर्षाधिपमासदिवसहोरेशाः ।
द्विगुणशुभाशुभफलदा परतः परतो ग्रहा यातुः ॥ १४ ॥

यात्राजसिंहतुरगोपगते वरिष्ठा मध्या शनैश्चरबुधोशनसां गृहेषु ।
भानौ कुलीरझषवृश्चिकगेऽतिदीर्घा शस्तास्तु देवलमतेऽध्वनि पृष्ठतोऽर्कः ॥ १५ ॥

सकलफलददशाढ्यके प्रवरा मध्याष्टवर्गसंशुद्धौ ।
न्यूनफला तात्कालिकविलग्नतिथिदिवसकरणाद्यैः ॥ १६ ॥

उत्तमफला यात्रा त्रिकोणतुङ्गोपच(ये)षु सौम्येषु ।
मध्या स्वमित्रभवनोपगेषु नीचारिभेष्वधमा ॥ १७ ॥

मध्याधमाधमोत्तमसममध्याधोधमोत्तमोत्कृष्टा ।
मध्योत्तमा च षष्ठा यात्रा यात्राविदामिष्टा ॥ १८ ॥

---

Testimonia :

12 cited by Govinda on *MC* 11, 7 15 cited by Utpala on *BS* 103,60 and by Govinda on *MC* 11, 8 15a-c cited by Viṣṇuśarman on *VM* 12, 14 18 cited by Viṣṇuśarman on *VM* 12, 12

Apparatus :

12a शुभकुजौ B 12b वा Govinda 12d पश्चाप्स्वदिशं नयतां B, प्रश्चान्नयति स्वकाष्ठाम् Govinda 13b ऽपि विलग्नगो Viṣṇuśarman शुभदानम् Viṣṇuśarman 15a शरगोपगता Utpala, Viṣṇuśarman 15b °सग्रहेषु B, °सां ग्रहेषु Govinda 15c कुलीरवृषवृश्चिकगे Govinda कुलीरशशिवृश्चिकगे Utpala ऽतिहीना Viṣṇuśarman 15d शस्ता Utpala ऽर्कें Utpala 16a सरांगलददशाढ्याके B, कल written above रांग and दोषा above दशा B² 17b °तुंगोपवेशु B 18a-b मध्यमाधमोत्तमसममध्याधमोत्कृष्टा Viṣṇuśarman 18c षोडा B, ढा written above डा B² 18d °वतामिष्टा Viṣṇuśarman

दिग्वर्गविलोमगे हते सन्ध्यार्कोपगते विदीधितौ ।
शुक्रे प्रवसन्नरेवशं याति बुधे च विलोमसंस्थिते ॥ १९ ॥

अनुलो(म)गते शशाङ्कजे शुक्रे चैवमपि व्यवस्थिते ।
यायादविशङ्कितोऽपरैः कथितोऽप्याङ्गिरसो यथेन्दुजः ॥ २० ॥

आक्रन्दसारी दिनमध्यगोऽर्कः पौरः पुरस्तादपरत्र यायी ।
आक्रन्द इन्दुर्गुरुमन्दसौम्याः पौराः स्मृता यायिन इत्यतोऽन्ये ॥ २१ ॥

यायिग्रहैर्वीर्यजयोपपन्नैः केऽरिप्रयाणं प्रवदन्ति धन्यम् ।
सत्यं तथा किं तु विशेषमाहुस्ते भूपतेः सत्फलदा जिगीषोः ॥ २२ ॥

दृष्टे साम्नां कर्मनिष्टं सुरारौ वैतालीयं पाददम्भौ च हित्वा ।
शस्तो राहुस्त्यायकर्मोपयातो यातव्यश्चासन्नतागश्च केतुः ॥ २३ ॥

साम्नां शुक्रबृहस्पती दिनकरो वक्रश्च दण्डेश्वरौ
भेदस्येन्दुजराहुकेतुरविजा दानस्य नक्तंचरः ।
अर्कादाटविकं यमा(द्) भृतबलं(स्यु)र्भार्गव(ाच्छ्रेणिकं)
ज्ञान्मन्त्वं रिपुदेशमौलबलपालक(ाभौमे)न्दुवागीश्वराः ॥ २४ ॥

यतोऽप(प)न्नदिवसकरोडुनाथयोस्ततो व्रजेद्रिपुनिधनाय पार्थिव ।
अथायनेन युगपदेकसंस्थयोर्द्युनक्तयो रविशशिनोर्व्रजेत्तदा ॥ २५ ॥

**(इति) बृहद्यात्रायां मिश्रकाध्यायो द्वादशः ॥ १२ ॥**

---

Testimonia :

19 cited by Viṣṇuśarman on *VM* 12, 5  21 cited by Utpala on *YY* 1, 14

Apparatus :

19c-d प्रवसन्नश B  19d याति बुधे च] सौम्ये वापि Viṣṇuśarman  20c पयादावि° B  21d ऽन्यः B  22a यापिगृहिर्विर्य° B  22d ज्ययदिषु B  23a सम्नाहं B  23c सास्तो B °स्तियाक्रमो° B  24b रक्तंचरः B  24c भृजबलं भार्गव B  24d द्वानैर्मेतं B, न written above नै B[2] °पालकेंदुपागीश्वराः B



दक्षिणपार्श्वस्पन्दनमभिधास्ये तत्फलक्षयो वामे ।
पृथिवीलाभः शिरसि स्थानविवृद्धिर्ललाटे स्यात् ॥ १ ॥

भ्रूनासिकान्तरे प्रियसमागमो भृत्यलब्धिरक्षिणोस्तु ।
दृक्पर्यन्तेऽर्थाप्तिः पूर्वे ज्ञेयात्र चोत्कण्ठा ॥ २ ॥

योषित्सौख्यं गण्डे दृक्चरमाघश्च सङ्गरे विजयः ।
श्रवणे च हितश्रवणं नासायां प्रीतिसौख्यं च ॥ ३ ॥

अधरोत्तरौष्ठयोः प्रियसमागमविजयौ गले च भोगाप्तिः ।
अंसे भोगविवृद्धिर्बाहाविष्टेन संयोगः ॥ ४ ॥

हस्तेऽर्थाप्तिः पृष्ठे पराजयो वक्षसि स्मृतो विजयः ।
प्रीत्युत्पत्तिः पार्श्वे स्तने त्वपूर्वा विषयलब्धिः ॥ ५ ॥

कट्यां बलप्रमोदः स्थानभ्रंशः प्रकीर्तितो नाभौ ।
हस्ते कोशविवृद्धिः क्लेशो हृदये ऽर्थपर्यन्तः ॥ ६ ॥

वाहनलाभः स्फिग्यायुर्वृषणे योषिदागमः शिश्ने ।
मुष्के तनयोत्पत्तिर्वस्तावन्तःपुराभ्युदयः ॥ ७ ॥

पृष्ठत ऊर्वोर्दोषः पुरतश्चलने तु शचिवहितलब्धिः ।
प्रचलति च जानुसन्धावरिसन्धानं बलवदुक्तम् ॥ ८ ॥

देशैकदेशनाशो जंघायां स्थानलब्धिरंघ्र्युपरि ।
अध्वागमनमलाभं चरणतले स्पन्दमाने तु ॥ ९ ॥

व्रणपिटकतिलकलांछनमशकादयस्त्वेव निर्दिष्टाः(स्युः) ।
कण्डूयन नरपतेर्दक्षिणपाणौ जयायैति ॥ १० ॥

**(इति) बृहद्यात्रायां देहस्पन्दनाध्यायस्त्रयोदशः ॥ १३ ॥**

---

Apparatus :

2a घ्रूनासि° M  2b त्रृत्य° M °क्षिणसोः B, °क्षणसोः M  3a योषित-सम्पकदंडे B  3b दृक्सीमायश्च M  3d प्रीतिसामुख्यम् M  5d त्यपूर्वे B  6b स्थाभ्रंशः B  6c हंते B, आन्ते M  7a-b स्फिग्धायुवेपने B, स्फित्यायुवेवने M  7b °दागशिरामे B  8a ऊरोर्दोः M  8b °श्चलग्नेन M सचिवलब्धिश्च M  8c प्रच° om. M च om. B  8c-d जान्वोस्सम्धत्सन्धा परिसम्धानं M  9a अध्यगमनं सलामे B, अध्वागमः सलाभं M  10b °मशक° om. M Col. om. M

पृष्टव्यो दैवविदा विश्रब्धमुपह्वरे नराधिपतिः ।
रिपुनिधनप्रणिधानं प्रति भवतः किं मनः कुरुते ॥ १ ॥

ब्रूयात्स चेन्मम मनः प्रोत्सहते हर्षयेत्ततश्चैवम् ।
चित्तानुकूलता सिद्धिलक्षणं तत्र च श्लोकाः ॥ २ ॥

शुभाशुभानि सर्वाणि निमित्तानि स्युरेकतः ।
एकतश्च मनश्शुद्धिस्तद्धि शुद्धं जयावहम् ॥ ३ ॥

कियच्चिरं न लभ्येत निमित्तं गमनानुगम् ।
न त्वेव तु मनोऽनर्थं चिरेणाप्यनुमन्यते ॥ ४ ॥

निमित्तानुचरं सूक्ष्मं देहेन्द्रियमहत्तरम् ।
तेजो ह्येतच्छरीरस्थं त्रिकालफलदं नृणाम् ॥ ५ ॥

प्रीयते न मनोऽनर्थैर्नासिद्धावभिनन्दति ।
तस्मात्सर्वात्मना यातुरनुमेयं सदा मनः ॥ ६ ॥

**(इति) बृहद्यात्रायां चित्तशुद्धिर्नामाध्यायश्चतुर्दशः ॥ १४ ॥**

---

यात्रार्वाक्सप्ताहाद्गुह्यकसाहायकं त्र्यहं पूर्वम् ।
त्र्यहमथ विजयस्नानं गृहयज्ञं सप्तमे दिवसे ॥ १ ॥

पक्वाममांसदधिफलकुसुमासवपायसप्रतिसरोभिः ।
मूलकभक्षैर्गन्धैर्गुग्गुलमुख्यैस्तथा धूपैः ॥ २ ॥

**Testimonia :**

3= *TY* 9, 6

**Apparatus :**

1b °मुपह्वरे B, °मुपस्वरे M 3c एकतस्तु B सनः शुद्धि° B, मनो यातु° M, मनो याति *TY* 4a क्यच्चिरं B, कश्चि in marg. B², कियच्चिन्तं M लभेतB, लभते M 4c स्वेवं B 4d °प्यनुगम्यते M 5a सुक्षमं B 5b °मनुत्तमम् M 5c ततो हेतशरीरस्थं B 5d °फलविनृणां B 6d सदा] यथा M Col. om. M

1a प्राक् M 1b °सह्राप्यमुच्यते/M 1c °स्नानात् M 1d वृहयज्ञं B, त्र्य in marg. B² 2c °भक्ष्यै° B 2d °गुंगुला° B, °गुंद्गुल° M



सांवत्सरसचिवपुरोहिताप्तपुरुषायुधीयपरिचारः ।
यायान्नगरचतुष्पथमभुक्तवस्त्रोत्तरीयाङ्गः ॥ ३ ॥

अर्धनिशायामुदयति सौम्ये वक्रेऽथवा तदंशे वा ।
दद्याद्बलिं दशस्वप्याशासु पुरोहितः क्रमशः ॥ ४ ॥

आवर्तयेत् पुरोधाः कृताञ्जलिस्तत्र रुद्रसावित्रीम् ।
कूष्माण्डमहारौहिणकुबेरहृदयान्यतः प्रपठेत् ॥ ५ ॥

द्वारत्रिकचतुष्काद्रिपुरनिष्कुटवासिनः ।
महापथनदीतीरगुहागाह्वरवासिनः ॥ ६ ॥

विश्वरूपा महासत्त्वा महात्मनो महाव्रताः ।
प्रथमाः प्रतिगृह्णीध्वमुपहारं नमोऽस्तु वः ॥ ७ ॥

सुपुत्रामात्यभृत्योऽयं सदारश्चैव पार्थिवः ।
रक्षणीयो हिते चास्य प्रयतध्वं समाहिताः ॥ ८ ॥

एवमुक्त्वा ततस्त्वर्घ्यं प्रमथेभ्यः प्रदापयेत् ।
सावित्र्याः स्थण्डिले तस्मिन् सूतस्तूपहरेद्बलिम् ॥ ९ ॥

यमेन्द्रवरुणार्थेशविष्णुपावकशूलिनाम् ।
यक्षरक्षःपिशाचानामसुराणां तथैव च ॥ १० ॥

ये स्युर्भूतगणास्तेभ्यो नमोऽस्त्वित्यनुयान्तु च ।
सन्नद्धाः स्वैः प्रहरणैररिसेनावधा इनाः ॥ ११ ॥

**Apparatus :**

3c-d °चक्षुश्चथभुक्त° B, ष्प written above श्च B² 4c दद्यद्वलिं B 4c-d दशस्यप्या° B, दशस्वह्या° M 5c-d कूक्ष्माण्डीमहारौहिणी° M 5d °हृदयादिसंशयतः प्रथमात् M 6a पंचत्रिच° M 6a-b °ष्कादपुरि° B, °ष्कोदुपुर° M 6d °गुह्यगमनवासिनः M 7a-b विश्वरूपा महारूपा महासत्त्वा महाव्रताः M 7c प्रतिगुरुंनिष्य° B 8a संभृत्या° M 8c हितस्यास्य M 8d सभाहिताः B 9d तस्तूप° B 11a येषु भूत° B, येस्युर्भीत° M 11b °नुयातु नः B 11c प्रकरणै° M 11d °वधायनः M

चमूसमेता अनुयान्तु पृष्ठतो विचित्रमाल्याभरणा मदोत्कटाः ।
विचित्रवस्त्रा जटिलाः किरीटिनः करालम्बोदरकुब्जवामनाः ॥ १२ ॥

निवृत्तयात्रः पुनरप्यहं हि वो विजित्य शत्रून् भवतां प्रसादतः ।
अतो विशिष्टं बहुवित्तमुत्तमं बलिं करिष्ये विधिनोपपादितम् ॥ १३ ॥

अनर्चिता ये नृपतिं सवाहनं विनाशयन्ति क्षपयन्ति वा चमून् ।
सुपूजिताः सिद्धिकरा भवन्ति ते प्रवाधकाः शत्रुगणस्य चाहवे ॥ १४ ॥

क्षणषष्ठिभागमात्रं प्रयतो नृपतिर्विसर्जयेत् प्रमथान् ।
दैवज्ञपुरोधोभ्यामावेदितमङ्गलो यायात् ॥ १५ ॥

इति बृहद्यात्रायां गुह्यकानुष्ठानोऽध्यायः पंचदशः ॥ १५ ॥

---

दुकूलमुक्तामणिभृन्नरेन्द्रः समन्विदैवज्ञपुरोहितोऽतः ।
स्वदेवतागारमनुप्रविश्य निवेदयेत्तत्र दिगीश्वरार्चान् ॥ १ ॥

अभ्यर्च्य मन्त्रैस्तु पुरोहितस्तानधश्च तस्यां भुवि संस्कृतायाम् ।
दर्भैस्तु कृत्वा स्तरमक्षतैश्च किरेत् समन्तात् सितसर्षपैश्च ॥ २ ॥

ब्राह्मीं सदूर्वामथ नागपुष्पीं कृत्वोपधानं शिरसि क्षितीशः ।
पूर्णान् घटान् पुष्पफलाभिधानानाशासु कुर्याच्चतुरः क्रमेण ॥ ३ ॥

---

Testimonia :

1-7 cited by Utpala on *BS* 47, 22

Apparatus :

12a चमूपसेनामनु° M 12c वीरागवस्त्रा M 12c-d कीटि...ना करालचोद्र-कुब्ज° B 13a निवृत्य°B पुनरस्य ह हि B 13c विचित्रं B 14a अनर्चितास्ते B 15b प्रणतो M प्रथमान् M 15c नैमित्तिकपुरोहताभ्या° M Col. इति Om. B गुह्यिका° B इति महायात्रायां गुह्यकानुष्ठानविधिः चतुर्दशोऽध्यायः M

Chapter 16 om. B 1d निवेशये° Utpala 2a मन्त्रैस्सपु° M 2c दर्भैश्च Utpala 2c-d °तैस्तां लिखेत् Utpala 3c पूर्वार्घजान् Utpala 3d दद्या° Utpala



यज्ञाग्रतो दूरमुपैति दैवमावर्त्य मन्त्रान् क्रमशस्त्रिरेतान् ।
लब्ध्वेकभुग् दक्षिणपार्श्वशायी स्वप्नं परीक्षेत यथोपदेशम् ॥ ४ ॥

नमः शम्भो त्रिनेत्राय रुद्राय परमात्मने ।
वामनाय विरूपाय स्वप्नाधिपतये नमः ॥ ५ ॥

भगवन् देव देवेश शूलभृद्वृषवाहन ।
इष्टानिष्टे ममाचक्ष्व स्वप्ने सुप्तस्य शाश्वतम् ॥ ६ ॥

एकवस्त्रः कुशास्तीर्णेः सुप्तः प्रयतमानसः ।
निशान्ते पश्यति स्वप्नं शुभं वा यदि वाशुभम् ॥ ७ ॥

गतैष्यजात्यन्तरसत्त्वसङ्गैः स्वप्नेऽप्यनूके गतिजे च नित्यम् ।
यातुः प्रकोपादनिलात्मकस्य नगाद्रितुङ्गाम्बरलङ्घनानि ॥ ८ ॥

---

Testimonia:

5, 6, 4, and 7-32 cited by Viṣṇuśarman on *VM* 12, 15

Apparatus :

4a °मुपैतु Viṣṇuśarman, °मुदैति Utpala 4b °मात्रृत्य M मन्त्रं Utpala प्रयत° Utpala Viṣṇuśarman °त्रिरेतम् Utpala 4d स्वप्नान् निरीक्षेत Viṣṇu-śarman 5b वरदाय च Utpala, वरुणाय च Viṣṇuśarman 6b शूलिन् वृषभवाहन Viṣṇuśarman 6c इष्टानिष्टं समाचक्ष्व Utpala 6d स्वप्नस्य Utpala, सन्यस्य Viṣṇuśarman after 6 Utpala adds:

इष्टमन्त्रान् ततः स्मृत्वा शिवशक्तिपुरोगमान् ।
अभ्यर्थनं ततस्तस्य कृत्वा सुप्रयतो नृपः ॥ १ ॥

7a °वस्त्रं कुशास्तीर्णं B, °वस्त्रे कुशास्तीर्णे Utpala 7b सुप्तं B, स्वप्ने Viṣṇuśarman °मानसम् B after 7 Viṣṇuśarman adds:

आद्ये वर्षात् वत्सरार्धात् द्वितीये यामे पाको वर्षपादात् तृतीये ।
मासात् पाकः शर्वरीपश्चिमांशे सद्यः पाको गोविसर्गे च दृष्टे ॥

before 8 Viṣṇuśarman inserts:

धातुप्रकोपग्रहपाकचिन्ता दृष्टाभिचारोद्भवगुह्यकोत्थाः ।

8a °सत्त्वसङ्ग° Viṣṇuśarman 8b ह्यनूके गतिजश्च चिन्त्यं Viṣṇuśarman 8c धातु° Viṣṇuśarman °कः स्यात् Viṣṇuśarman 8d तर्वादितु° M, नागाद्रितु° Viṣṇuśarman

पित्ताधिके काञ्चनरत्नमाल्यदिवाकराग्निप्रभृतीनि पश्येत् ।
श्लेष्माधिकश्चेन्दुभशुभ्रपुष्पसरित्सरोम्भोधिविलङ्घनानि ॥ ९ ॥

जघन्यमध्यप्रथमे निशांशे प्रावृच्छरन्माधवसंज्ञते च ।
काले मरुत्पित्तकफप्रकोपात् साधारणः स्यात् फलसन्निपातः ॥ १० ॥

दशासु चोक्तं ग्रहपाकजातं चिन्ता तु दृषा तु यथा तथैव ।
बीभत्ससत्त्वाभिभवोऽभिचारो विघ्नोद्भवो गुह्यकजः प्रदिष्टः ॥ ११ ॥

अनूकचिन्ताग्रहदोषदृष्टान्यतीतकर्माणि च निष्फलानि ।
ध्रुदृष्टपूर्वाः कथिताश्च तद्वदन्यत्र लोके कथिता विशेषाः ॥ १२ ॥

प्रत्यक्षवद्भवति यः स्फुरतीव चान्तः
स्वप्नस्य तस्य नियमात् सदसत्फलाप्तिः ।
स्वप्नाः शुभाशुभकृताः फलदा नराणा-
मुद्देशमात्रमिहताननुवर्णयामि ॥ १३ ॥

स्वाङ्गप्रज्वलनं परोपगमनं शक्रध्वजालिङ्गनं
दिक्संवृत्तनरेन्द्रकन्यकतनोर्विक्षेपणं दिक्षु च ।
बन्धो वा निगले ग्रसेच्च दहनं नानाशिरोबाहुता
छत्रं वा द्विरदोऽभिषिच्य बिभृयाद्दिव्योऽथवा ब्राह्मणः ॥ १४ ॥

---

**Apparatus**

9a वित्तेऽधिके M °रक्त° M 9c °शंखशुक्ति° Viṣṇuśarman 10b प्रावृट्शर° Viṣṇuśarman, प्राविन्वरं M 10c °कोपे Viṣṇuśarman 10d °णे स्यात्खलु सन्निपाते M, °णं स्यात्फलसन्निपातः Viṣṇuśarman 11a जातं फल° Viṣṇuśarman 11b च दृष्टा च Viṣṇuśarman 11d विश्वोद्भवो M गुह्यरुजः Viṣṇuśarman 12a °गतिदोषतृष्णा° Viṣṇuśarman 12b °न्यभीक्ष° M 12c °दीर्घाः Viṣṇuśarman 12d °दनित्यपाका गदिताश्च शेषाः Viṣṇuśarman 14a छत्रध्वजा° Viṣṇuśarman 14b °नरैन्द्रकन्यचतनोर्विक्षे° M, °नरै-र्निकृत्तपतनाः प्रक्षे° Viṣṇuśarman 14c ग्रसेत Viṣṇuśarman 14d उत्रं वा M, स्रच्छत्रं Viṣṇuśarman द्विरदे M भिषच्य M



उडुपदिनकृद्दोशृङ्गाग्रस्रुताम्ब्वभिषेचनं
यदि च महिषीसिंहीव्याघ्रीगवां सुखदोहनः ।
जठरनिसृतैश्चान्त्रैर्ग्रामद्रुमादिनिवेष्टनं
विशति यदि वा सुश्लिष्टाङ्गी तनुं प्रवराङ्गना ॥ १५ ॥

मनुजहृदयमूर्ध्नां भक्षणं वा स्वदेह-
भुजगतुरगसिंहेभाजमांसादनानि ।
तृणतरुकुसुमाम्भःप्रोद्गमो वा स्वनाभौ
क्षितितनुपरिवर्तोन्मूलने वाधिराज्यम् ॥ १६ ॥

दिनकरशशितारामक्षणस्पर्शणानि
दरणमपि च मूर्ध्नः सप्त पञ्च त्रिधा वा ।
वृषभगृहनगेन्द्राश्वेभसिंहाधिरोहो
ग्रसनमुदधिभूम्योश्चाधिराज्यप्रदानि ॥ १७ ॥

विपुलरणविमर्दद्यूतवादैश्च जित्वा
पशुमृगमनुजानां लब्धिरग्र्यासनं वा ।
विडशनपरिलेपोऽगम्यनारीगमो वा
स्वमरणशिखिलाभः सस्यसन्दर्शनं च ॥ १८ ॥

सितसुरभिमनोज्ञालेपमाल्याम्बराणां
द्विजसुरगुरुराज्ञां दर्शनान्याशिषं च ।

---

**Apparatus :**

15a °दिनपगोश्शृङ्गस्नातानंघभि° Viṣṇuśarman 15b भवति यदि वा व्याघ्री-सिंहीगवां मुखदोहनं Viṣṇuśarman 15c °सृतैरान्त्रै° Viṣṇuśarman °द्रुमा-द्यभिषेचनं Viṣṇuśarman 15d वा om. Viṣṇuśarman 16a °सास्वदानस्वहृत भुजगसिंहे° Viṣṇuśarman 16c °माम्बुप्रोद्भवो Viṣṇuśarman 16d क्षितिररिपरि° Viṣṇuśarman चाधि° Viṣṇuśarman 17b दलन° Viṣṇuśarman 17c °नरैण-श्वेभ° M 17d °धिनेम्योश्चा° Viṣṇuśarman 18b पशुमनुजमृगाणां Viṣṇuśarman °रध्यापनं Viṣṇuśarman 18c विशसनपरिलोपो Viṣṇuśarman 18d स्वशरण° Viṣṇuśarman 19a सितकुसुममनोज्ञा Viṣṇuśarman °लेपलाल्य° M °म्बरस्त्री Viṣṇuśarman 19b °गुरुसुर° Viṣṇuśarman दर्शनं चाशिषश्च Viṣṇuśarman

मणिरजतसुवर्णाम्भोजपात्रेषु भुङ्क्ते
यदि दधिपरमान्नं शोणिते मज्जने वा ॥ १९ ॥

सिततुरगरथध्वजातपत्रव्यजनसरोजमणिद्विपेन्द्रलाभाः ।
अभय जय च भुंक्ष्व चेति शब्दाः परिणतराज्यफलप्रदाः प्रदिष्टाः ॥२०॥

पूर्वजन्मसु चाभ्यस्ता सत्त्वरूपा गतिस्तदा ।
(तद)नूकमिति प्रोक्तमिह पश्चात् करोति यत् ॥ २१ ॥

मुद्रादिषु यज्ञनीविषु स्त्रीसंज्ञादिषु चाङ्गनासिरुक्ता ।
लब्धे शयनेऽथ दर्पणे भृङ्गारादिषु चोद्भवः(सुत)स्य ॥ २२ ॥

कामिन्यां धनलब्धिरम्बुतरणे शोकस्य नाशो भवे-
द्वर्षो रोदितशोचितादिषु तथा दाहे विवृद्धिर्मता ।
गोशृङ्गिद्विजदेवतापितृसुहृद्भूपाश्च शंसन्ति यत्
स्वप्ने तन्नियमाद्भवत्यवितथं नेष्टं शुभं वा फलम् ॥ २३ ॥

नाभेरन्यत्र गात्रे तृणतरुकुसुमप्रोद्भवः स्नेहपानं
क्रीडायानोपभोगः खरकपिकरभव्यालरूपैश्च सत्त्वैः ।
कायस्यालेपनं वा कलुषमलमषीगोमयस्नेहपङ्कै-
र्दन्जिह्वादन्तबाहुप्रपतनमथवानर्थशोकप्रदानि ॥ २४ ॥

Apparatus

19c °पत्रेषु Viṣṇuśarman 19d मज्जतेऽसृग्घटे Viṣṇuśarman 20a °गफलध्व° Viṣṇuśarman 20c भुंक्ष्य Viṣṇuśarman 20d परिमित° M. 21-22b om. Viṣṇuśarman 21a-b चाभ्यस्तं सत्वरूपं M 22a मुद्राषदा यजननीविप्रस्त्री° M 22c सरके M च Viṣṇuśarman 22c-d मृङ्गादिषु M 22d चोभवस्य M चाङ्गासिरुक्ता Viṣṇuśarman (22b) 23a त्रैमिण्ये M °म्बुकरणे M 23b सिंहीदोहनरोदनादिषु Viṣṇuśarman °शोदिता° M ऽपि वृद्धिः स्मृता Viṣṇuśarman 23c गोलिङ्ग° Viṣṇuśarman °पितृवधूबालाश्च Viṣṇuśarman शं om. M 23d °यमान् M °तथन्नेषं M, ° तथं कष्टं Viṣṇuśarman तद्भवेत् Viṣṇuśarman 24a गात्रे M, देशे Viṣṇuśarman 24b °भोगाः Viṣṇuśarman° °करभकपि° Viṣṇuśarman 24c °जलमषीकज्जल° Viṣṇuśarman 24d °दन्तपङ्क्तिप्रपतनमपि वानर्थशोक° Viṣṇuśarman °र्थ° om. M



गीतोत्क्रीडितभूषितप्रहसितप्र(मोदिता) खेलिता-
न्यर्केन्दुध्वजतारकानिपतनं स्त्रोतोवहाया गमः ।
रज्जुच्छेदचिताप्रपातजननीगात्रप्रवेशस्तथा
स्वप्ने कांस्यविचूर्णनं च शिरसः क्लेशामयानर्थदाः ॥ २५ ॥

श्मश्रुकेशनखदैर्घ्यकल्पना वानरीविकृतनार्युपासनम् ।
रक्तवस्त्रमनुजाङ्गमर्दनं रोगमृत्युभयशोकतापदम् ॥ २६ ॥

स्थलमृगपशुकीटानूपवर्यन्यजानां
प्लवनमुदकराशौ स्याद्विवाहोत्सवो वा ।
सरसिजजतुभाण्डक्रीडनं नर्तनं वा
मलिनविवसनत्वं चाशु रोगप्रदानि ॥ २७ ॥

स्वद्रव्यनाशः सुहृदां वियोगश्छेदश्च पाण्योः कमलापहारः ।
प्रासादवेश्मादिशिरोवताराः स्वप्नेषु नेष्टा इति संप्रदिष्टाः ॥ २८ ॥

मित्रस्याप्तिः स्याद्विकोशासिलाभे वश्यं गच्छेद्भूपतेः शासनाप्तौ ।
सर्पे कर्णौ नासिकां वा प्रविष्टे तच्छेदः स्याद्वेष्टने चाशु बन्धः ॥ २९ ॥

आद्ये वर्षाद्वत्सरार्धाद्द्वितीये यामे पाको वर्षपादात्तृतीये ।
मासात्पाकः शर्वरीपश्चिमांशे सद्यः पाको गोविसर्गे च दृष्टे ॥ ३० ॥

दृष्ट्वा स्वप्नं शोभनं नेह सुप्यात् पश्चाद्दृष्टो यः स पाकं विधत्ते
शंसेदिष्टं तत्र साधुद्विजेभ्यस्ते त्वाशीभिः पूजयेयुर्नरेन्द्रम् ॥ ३१ ॥

Apparatus

25a om. Viṣṇuśarman °प्रेंखोलिता° 25b भृङ्गारुध्वजपावकाभिपतनं स्रोतोवहासो भ्रमः Viṣṇuśarman 25c °दमतिप्र° Viṣṇuśarman °नीगतप्र° M 25d कायविधूर्णनं Viṣṇuśarman शिरसः om. M 26a °दीर्घं° Viṣṇuśarman 26d °तापदा° M 27a °मृदु° Viṣṇuśarman °चर्या गजानां Viṣṇuśarman 27b °मुदयराशभ M 27c °जल° Viṣṇuśarman 27d °त्वाच्चाशु शोक° Viṣṇuśarman 28a पुत्रस्य नाशः Viṣṇuśarman 28b कलहाय नित्यम् Viṣṇuśarman 28d स्वप्नेऽप्यनिष्टा Viṣṇuśarman 29b वश्यं राजा गच्छते Viṣṇuśarman 29d तच्छेद M 30a वर्षे M 30b-d वर्षपादात् to पाको om. M 31a स्वप्ने दृष्टे शोभनेनेव विद्यात् Viṣṇuśarman 31b यस्य Viṣṇuśarman 31c तद्वक्तव्यं साधुमित्र° Viṣṇuśarman 31d चाशीर्भिर्वर्धयेयु° Viṣṇuśarman

भूयः प्रस्वपनं न चास्य कथनं गङ्गाभिषेको जपः
शान्तिः स्वस्त्ययनं निषेवणमपि प्रातर्गवाश्वत्थयोः ।
विप्रेभ्यश्च तिलान्नपानकुसुमैः पूजा यथाशक्तितः
पुण्यं भारतकीर्तनं च कथितं दुःस्वप्नविच्छित्तये ॥ ३२ ॥

**इति बृहद्यात्रायां स्वप्नाध्यायः षोडशः ॥ १६ ॥**

---

क्षीरैकतरुनगार्णवतूलनदीसङ्गमाः सरः शोष्यम् ।
गोस्थानपट्टसुरालयरुचिराः स्नानप्रदेशाः स्युः ॥ १ ॥

समगम्भीरानूषरशाड्वलभूमौ प्रदक्षिणजलायाम् ।
काष्ठारश्मिप्रमितं वास्तु लिखेत् सर्वतो भद्रम् ॥ २ ॥

सर्वैर्धान्यैस्तिलमुद्गमाषचणकातसीपरिश्लिष्टम् ।
अच्छिन्नाग्रैर्दर्भैः कुशैः स(मस्ता)त् परिस्तीर्णम् ॥ ३ ॥

रजतमणिहेमगर्भैः सक्षीरप्रवालसितसूत्रै(श्च) ।
कलशैः कालमूलैश्च शोभितद्वारं (तन्मध्ये) ॥ ४ ॥

तन्मध्ये ब्राह्मी ब्रह्मा साम दूर्वाप्रशंखपुष्पाः स्युः ।
दिङ्मुखमरत्नितुङ्गं स्थाप्यं पीनं सप्रवेष्टम् ॥ ५ ॥

तस्य ग्रहानुलोमं कालं केचिज्जगुर्निषेवेत ।
पुरोध........षाष्टिकयवपायसाहारम् ॥ ६ ॥

अभिमतदेवकृतमनाः पूर्वद्वारेण पार्थिवः प्रविशेत् ।
भद्रासनं प्रदक्षिणमध्यासित्वाथ तस्य विधिः ॥ ७ ॥

---

Apparatus

32a भूयोऽपि स्वपनं Viṣṇuśarman 32c विप्राणां च Viṣṇuśarman °न्नदानकु° Viṣṇuśarman Col. महायात्रायां M पञ्चदशः M

1b सरोः शोष्यं M 2c झष्टा° M 3c अच्छिन्नाग्रादर्भै° M 5d सप्रवृद्द (?) षट् M 6a ग्रहानलोम्यं M



प्रियङ्गुसिद्धर्थकनागदानगोरोचनाक्षैर्घृतैः समेतैः ।
प्रागात्मरक्षा प्रतिचक्रपूतैः स्नानोन्मुखस्यावनिपस्य कार्या ॥ ८ ॥

श्वेतस्य बभ्रोरथवा वृषस्य चर्मास्तरे व्याघ्रमृगेन्द्रयोर्वा ।
तत्स्थस्य कुर्यान्मनुजेश्वरस्य जयाभिषेकं विधिवत् पुरोधाः ॥ ९ ॥

क्रमान्महीरूप्यसुवर्णकुम्भैः क्षीरस्य दध्नो हविषश्च पूर्णैः ।
स्नायाच्च तोयैः सह सप्तमृद्भिः पश्चाच्च सर्वौषधिगन्धतोयैः ॥ १० ॥

परिजप्य महारौहिणकुष्माण्डकुवेरहृदयरुद्रगणैः ।
अभिषेचयेन्नरेन्द्रं पुरोहितोऽस्मिन् समृध्द्या च ॥ ११ ॥

द्वात्रिंशतिं षोडश वाथवाष्टौ घटप्रमाणं मुनिभिः प्रदिष्टम् ।
स्नातस्त्वलङ्कारमपास्य पूर्वं नवं विदध्याद्द्विजमन्त्रपूतम् ॥ १२ ॥

मागधबन्दिसुहृद्द्विजसूतैरभिमतवाक्कृतमङ्गलकुशलः ।
चर्मसु चोपविशेदभिषिक्तः पृषतगजेन्द्रविडालवृकाणाम् ॥ १३ ॥

गृहीतधूपाम्बरमाल्यगन्धस्त्रिर्भ्रामयित्वोपरि चौषधींश्च ।
वामेऽस्य पार्श्वेऽग्रत आस्थितो वा प्रतीपपातं जुहुयाद्धुताशम् ॥ १४ ॥

गोरोचनाहेमफलानि सर्पिर्ब्राह्मीं सदूर्वां सितसर्षपांश्च ।
आसेव्य सर्वाणि यथोपदेशं भक्त्या द्विजान् स्वस्ति च वाचयित्वा ॥१५॥

सौम्येन यायात् फलपुष्पपाणिर्द्वारेण पश्येन्न च पौरुहूतम् ।
प्रागुद्धरेद्दक्षिणपादमेवं कुर्वन्नृपः सर्वरिपून् प्रशास्ति ॥ १६ ॥

**इति बृहद्यात्रायां विजयस्नानोऽध्यायः सप्तदशः ॥ ३०९ ॥ १७॥**

---

Apparatus :

8b °नाक्षौ घृ° M 8c f. 17r of B Begins with पूतैः 9b ° योश्व M 10a °रोप्य° B 10b क्षिरस्य दग्धो M 10c तोयैश्च समस्तमृद्भिः M 11a-b °रोहिणी-कूश्माण्ड° M °कुवेर° om. M 11c °न्नृपतिं B 12a °त्रिशतं B, °त्रिंशकं M 12c स्नातो ह्य° M 12d सर्वं विदद्या° M 13b °मङ्गल इष्टम् M 13c-d °षिक्तो वृषभखगेन्द्रविलालमृगाणाम् M 14a-b °गंधे स्त्रीभ्रा° M 14c ग्रहणास्थितो M 14d प्रतिपवातं B 15a °हेमफ° om. B 15b ब्रह्मीं° M 16b पत्यन्न M 16d कुर्वन् om. M Col. इति om. B स्नानोऽध्या om. B इति महायात्रायां विजय-स्नानं षोडशोऽध्यायः M

ग्रहयज्ञमतो वक्ष्ये तत्र निमित्तानि लक्षयेद्बुधाम् ।
भङ्गो मानोनायां दिग्भ्रष्टायामसिद्धिश्च ॥ १ ॥

नगरपुरोहितदेवीसेनापतिपार्थिवक्षयं कुरुते ।
प्राग्दक्षिणापरोत्तरमध्यमभागेषु या विकला ॥ २ ॥

तत्रार्चा ताम्रमयी सवितुः पालाशिका स्रुक्समिधः ।
आ कृष्णेति च मन्त्रो रक्ता गन्धाः सहागुरुणाः ॥ ३ ॥

माषातसीतिलांश्चार्कसमुद्गचणकान् विहाय भोज्यविधिः ।
वकुलार्कागस्त्यपलाशशल्लकीकुसुमपूजा च ॥ ४ ॥

अष्टशतसंमितेभ्यो विप्रेभ्यो दक्षिणाहिताग्निभ्यः ।
देया वृषकनकमही सहस्रकिरणं (स)मुद्दिश्य ॥ ५ ॥ (सूर्यः)

न्यग्रोधात् स्रुक्समिधः स्फटिकादर्चा च शीतगोः कार्या ।
शैलेयकनखवर्ज्या गन्धाः कुसुमानि च सितानि ॥ ६ ॥

गोधूमशालियावरवण्डगोपयःपूर्वमशनमथ मन्त्रः ।
आप्यायस्वेति भवेच्चातुर्वेदाय दद्याच्च ॥ ७ ॥

मणिमुक्ताक्षौमहिरण्यसंयुतां श्वेततुल्यवत्साङ्गाम् ।
रजतशफविषाणां क्षीरिणीं च तु हिमांशुमुद्दिश्य ॥ ८ ॥ (चन्द्रः)

---

Testimonia :

1-2 cited by Utpala on *BS* 43, 14 3-5 cited by Utpala on *BS* 47, 29-33

Apparatus

1d द्रिगरुषाया° M 3a °मय° Utpala 3b पालाशिकी Utpala च ब्रुसमिद्धः M, समित् स्त्रुक् च Utpala 3c च om B 3c सहागरुणा M, सहागुरुणा B Utpala. 4a माया° B °तसीतिलाः श्वकं B, °तसीतिलाल्वक° Utpala, च शाडुल° M, 4b समुद्रक्षणकान् B, समुद्गलम्रगान् M, °मुद्गान् चणकान् Utpala 4c °र्कागस्ति° M 4d °शल्यकी° Utpala, °नुल्यकी° M. 5a °सस्मिते° Utpala, °म्मिते° B 5d स° Utpala 6a स्त्रीक्यमिधः B, स्रक्समिधः M 6c °नग° B 7a °नाव° B 8d तुहिनांशु BM



रक्तकरवीरसमिधो रक्ता गन्धाश्च चन्दनात् प्रतिमा ।
मन्त्रश्चाग्निर्मूर्धेत्यशनं गुडषष्टिकप्रायम् ॥ ९ ॥

ताम्रकनकप्रवालौर्णिकानि देयानि दक्षिणा चास्य ।
उद्दिश्य धरातनयं छन्दोगेभ्यो व्रतस्थेभ्यः ॥ १० ॥ मं(गलः)

मन्त्रश्चोद्बुध्यस्वेत्यादि प्रतिमा च युक्तिलोहमयी ।
स्रुक्समिधश्च मधूकादथवा चान्द्रेरपामार्गात् ॥ ११ ॥

युक्तिप्राया गन्धाः कालीयककुङ्कुमप्रियंग्वाद्याः ।
कुसुमानि माल्तीवकुलतिलकमदयन्तिकादीनि ॥ १२ ॥

भोज्यं मसुरतिलशालिमुद्गचणकादि दक्षिणा स्वच्छश्च ।
सरजतमणिर्व्रतिभ्यश्चान्द्रेराथर्वणेभ्यश्च ॥ १३ ॥ बु(धः)

अश्वत्थ्यर्जुनसमिधः कनकार्चा त्वग्निवर्जिता गन्धाः ।
पीतकुसुमानि च गुरोर्भोज्यं तिलमुद्गचणकानि ॥ १४ ॥

बह्वृग्भ्य एकवर्णं मध्यमवयसं तुरङ्गमं दद्यात् ।
शृङ्गीसुवर्णयुक्तं बृहस्पतेश्चेति गुरोर्मन्त्रः ॥ १५ ॥ बृ(हस्पतिः)

रजतार्चा मदनीया गन्धाः कुसुमानि चित्रसुरभीणि ।
पनसोदुम्बरसमिधो भोज्यं वृष्यं च भृगुसूनोः ॥ १६ ॥

अन्नात् परिस्रुताद्यो मन्त्रः स्त्रीकर्कशास्त्वलङ्काराः ।
अध्वर्युभ्यो देया द्वात्रिंशद्भ्यः तदर्हेभ्यः ॥ १७ ॥ शु(क्रः)

---

Apparatus :

9d °गुल° M 10d छंदोर्वेभ्यो B मं om. M 11a °स्वेत्या° om. M °ति M 11b प्रतिमास्य तु शक्ति° M 11c स्त्रीक्यमिधश्च B 12b कालेयक° M °प्रियंग्याद्वा: B 13a मसुरं तलशालि° B, मसूरतिल° M 13b/14b स्वच्छश्च to °वर्जिता om. M 13b श्वत्तरः B 14a अश्वत्थीर्जुन° B 14c च om. B 14d तिलमाषमुद्ग° B °वटकादि M 15a वहृग्भ्य B, बह्विभ्य M 15d बृहस्पतेश्वति B, बृहस्पते इति M बृ om. M 17a अन्ना M 17a-b °स्रुतो मंत्रो दक्षिणा स्त्री° B 17d °तन्येभ्यः B शु om. M

शालशमीस्रुक्समिध: शन्नो देवीति भास्करेर्मन्त्र: ।
लोहार्चा शैलेयकमुस्तकशुक्तयुत्कटा गन्धा: ॥ १८ ॥

गिरिकर्णिकातसीस्पन्दनांजनादीनि कृष्णपुष्पाणि ।
अशनानि कृष्णतिलमाषचणकनिष्पावमुख्यानि ॥ १९ ॥

प्रेष्यामतीतवयसां त्रप्वंजनसीसकृष्णलोहयुताम् ।
दद्यादुद्दिश्यार्कि वृषलीपतिवृद्धमूर्खेभ्य: ॥ २० ॥ श(नि:)

वैभीतस्रुक्समिधो राहोर्होमेऽथवा भवेद्दूर्वा ।
मन्त्रश्च कया नश्चित्रपूर्वकोऽर्चा च नागमयी ॥ २१ ॥

उद्दिश्य सैंहिकेयं महिषं प्रतिपादयेत् सुवृद्धेभ्य: ।
विप्रेभ्य इति यदन्यत् तत्सर्वं सूर्यपुत्रसमम् ॥ २२ ॥ (राहु:)

केतो: कांस्यप्रतिमा केतुं कृण्वन्न केतवे मन्त्र: ।
आरण्यकुसुमपूजा स्रुक्समिध: खदिरकुशमय्य: ॥ २३ ॥

मांसौदनमशनं ब्रह्मबन्धुवर्गस्य दक्षिणा देया ।
प्रहरणफल्गुद्रव्याणि चैवं केतुं समुद्दिश्य ॥ २४ ॥ (केतु:)

(इति) बृहद्यात्रायां ग्रहयज्ञाध्यायोऽष्टादश: ॥ ३३३ ॥

---

कृत्वैवं ग्रहपूजामृचा ततश्चाग्निलिङ्ग्या जुहुयात् ।
श्लोकांश्चास्मिन्नर्थे काश्यपमुनिचोदितान् वक्ष्ये ॥ १ ॥

ततोऽप्रतिरथं कृत्स्नं यात्रालिङ्गं च यद्भवेत् ।
आयुष्यमभयं चैव सर्वं चैवापराजितम् ॥ २ ॥

---

Apparatus :

18c लोहादर्चा M 18c-d शैलेकमुस्तकशंत्यु° B, शैल्यमुस्ताश्शुक्त्यु° M 19b °दी° om. M 19c भोज्यानि 19d °निस्याप° B, °निष्वाप° M 20a प्रेष्यमतीतवयसं M 20b रूपाञ्जनकृष्णलोहयुतं M 20d श om. M 21a वैभीतिक्य: स° B, वैभीतत्यस्रुक्स° M 21b भवेद् om. M 21c °श्च om. B 22b प्रवृद्धेभ्य: M 23a कांसा° B, कांसि° M 23d °मद्य: B 24a मांसोत्तर° M 24d चैवं om. M केतुमुद्दिश्य M Col. om. M

1c °न्नर्थे om. B 1d कश्यप° B 2d चेति पराजित: M



शर्मवर्मगणं चैव तथा स्वस्त्ययनं गणम् ।
एतान् पञ्चगणान् हुत्वा संस्थाप्याग्निं यथाविधि ॥ ३ ॥

भूत भूतेति च गणं यत्ते चन्द्रस्तथैव च ।
ऐन्द्रो गणस्तथा चान्द्रो मन्त्राशी:सूक्तमेव च ॥ ४ ॥

भूयो भूयस्तथा ज्वालां संस्पृश्याथ पुरोहित: ।
स्पृशेच्च नृपतिं मन्त्रैरुच्चैर्ब्रूयात् पुन: पुन: ॥ ५ ॥

चक्षुर्द: प्राणदश्चापि वर्चोदश्च भव प्रभो ।
अनाधृष्यतमश्चासि यथा त्वं हव्यवाहन ॥ ६ ॥

शात्रवाणां तथा राजाप्यनाधृष्यो भवत्ययम् ।
हूयमाने निमित्तानि वक्ष्याम्यहमत: परम् ॥ ७ ॥

कम्पोत्कासविजृम्भणप्रचलनस्वेदाश्रुपातक्षुधो-
द्राद्यं च पुरोधस: स्मृतिविपच्चानिष्टमन्यच्छुभम् ।
आज्यं केशपिपीलिकामलयुतं सत्त्वावलीढं च यत्
तन्नेष्टं शुभमन्यथोपकरणं द्रव्याण्यनूनानि च ॥ ८ ॥

उत्थाय स्वयमुज्ज्वलार्चिरनल: स्वाहावसाने हवि-
र्भुंक्ते देहसुख: प्रदक्षिणगति: स्निग्धो महान् संहत: ।
निर्धूम: सुरभि: स्फुलिङ्गरहितो यात्रानुलोमो मृदु-
र्मुक्तेन्दीवरकांचनद्युतिधरो यातुर्जयं शंसति ॥ ९ ॥

---

Testimonia

8-10 cited by Utpala on *BS* 43, 14

Apparatus :

3a शर्मखर्मगणश्चैव M 3c एकत्वं च गणान् हुत्वा M 4a भूत om. M भूनेति M 4a-b गणयत्ते M °न्द्रस्तथै° om. B 4d मात्रा श्री M 5a भूयस्ततो M 5c-d मंत्रैरेवं M 6a चक्षुर्दि: B °श्चासि B 6b वर्गेदश्च B 6c अनाधृ-ष्यतंश्चासि B °तमाश्चासि M 7b °प्यनाधृव्यो B, त्वनायुष्यो M 7c यजमाने M 8a कम्पोच्छ्वास° Utpala °प्रविञ्चित° M °वातक्षुता M, °याता: युतं B 8b गाद्रद्यं B, गात् गद्यं M स्त्वितिवि° M °मन्वत्शुभम् B 8c °वलीडं M 8d °मन्वथो° B, °मन्यतो° M च M Utpala, गा B 9b °सुख° Utpala, °सुखं M 9c सुगति: B 9d कुंदेंदीवर° B वह्नि:श्रियं यच्छति Utpala

इष्टद्रव्यघटातपत्रतुरगश्रीवृक्षशैलाकृति-
भेर्यब्दोदधिदुन्दुभीभशकटस्निग्धस्वनः पूजितः ।
नेष्टः प्रोक्तविपर्ययो हुतवहः स्निग्धोऽन्यथापीष्टदः
सव्येऽङ्गे नृपतिं दहन्नतिहितः शेषं च लोकाद्वदेत् ॥ १० ॥

**इति बृहद्यात्रायामग्निलक्षणाध्याय एकोनविंशः ॥ ३४३ ॥**

---

व्रजेद्दिगीशं हृदये निवेश्य यथेन्द्रमैन्द्यामपराश्च तद्वत् ।
सुशुक्लमाल्याम्बरभृन्नरेन्द्रो विसर्जयेद्दक्षिणपादमादौ ॥ १ ॥

सितातपत्रो मणिरत्नशोभः प्रधूयमानैः सितचामरैश्च ।
जयस्वनापूरितराजमार्गो द्विजेन्द्रमन्त्राभिविवृद्धतेजाः ॥ २ ॥

कल्याणनामसचिवाप्तजनायुधीय-
दैवज्ञविप्रजनकंचुकिमध्यसंस्थः ।
द्वात्रिंशतं समुपगम्य पदानि भूमौ
प्रागादि नागरथवाजिनरैः प्रयायात् ॥ ३ ॥

**इति बृहद्यात्रायां प्रस्थानिकाध्यायो विंशतितमः ॥ ३४६ ॥**

---

10b मेर्यम्भो° M °स्वनैः Utpala 10c °विपर्यये Utpala ऽन्यथानेष्टदः M 10d नृपतेर्दह° Utpala °न्नपि हितः M Col. इति om. B

इति महायात्रायां गृहयज्ञाध्यायः सप्तदशः M

Tetimonia

3 cited by Govinda on *MC* 11, 89 3d cited by Govinda on *MC* 11, 90

Apparatus :

1b °मैन्द्यम° M 2a घृतातपत्रो M 2a-b °शोभितो विधूयमानैः M 2d °भिविशुद्धतेजाः M 3a कल्याणनर्म° M °सचिदाप्त° B 3b °कांचिक° M 3c द्वात्रिंशकं M 3d प्रागादिताश्व रथ° M °नरैस्तु यायात् Govinda Col. इति om. B इति महायात्रायां अभिनिर्गमो नाम अष्टादशोऽध्यायः M



माभूत् प्रसङ्गादतिविस्तरोऽत्र गजाश्वपुंलक्षणदर्शनेषु ।
निमित्तमात्रं कथयाम्यतोऽहं प्रयाणकालोपयिकं नृपाणाम् ॥ १ ॥

ताम्रौष्ठताल्वुवदनाः कलविङ्कनेत्राः
स्निग्धोन्नताग्रदशनाः पृथुलायतास्याः ।
चापोन्नतायतनिगूढनिमग्नवंशा-
स्तन्वेकरोमचितकूर्मसमानकुम्भाः ॥ २ ॥

विस्तीर्णकर्णहनुनाभिललाटगुह्याः कूर्मोन्नतैर्द्विनवविंशतिभिर्नखैश्च ।
रेखात्रयोपचितवृत्तकराः सुवाला धन्याः सुगन्धिमदपुष्करमारुताश्च ॥ ३ ॥

दीर्घाङ्गुलिरक्तपुष्कराः सजलाम्भोदनिनादबृंहिणः ।
बृहदायतवृत्तकंधरा धन्या भूमिपतेर्मताङ्गजाः ॥ ४ ॥

निर्मदाभ्यधिकहीननखाङ्गान् कुब्जवामनकमेषविषाणाम् ।
दृश्यकोशफलपुष्करहीनान् श्यावनीलशवलासिततालून् ॥ ५ ॥

स्वल्पवक्त्ररुहमत्कुणखण्डान् हस्तिनीं च गजलक्षणयुक्ताम् ।
गर्भिणीं च नृपतिः परदेशं प्रापयेदतिविरूपफलास्ते ॥ ६ ॥

दन्तमूलपरिणाहदीर्घतां द्विः प्रमुच्य परतोऽस्य कल्पयेत् ।
श्यावपूतिमलरक्तदर्शनं पापसत्त्वसदृशं च पापदम् ॥ ७ ॥

पार्थिवोपकरणाकृतिं यदा चिह्नमुद्वहति कल्पिते रदे ।
श्रीजयार्थबलवृद्धयस्तदा स्निग्धशुक्लरुचिराश्च शोभनाः ॥ ८ ॥

---

Testimonia

1. cited by Utpala on *BY* 13, 10 2-10 equal *YY* 13, 1-9 7 cited by Utpala on *BS* 93, 1 8 cited by Utpala on *BS* 93, 7

Apparatus:

1a °स्तरो om. B 1a-b °विस्तरोरगजाश्वपंलक्षणदर्शनेषु Utpala 1b गजाश्व पुं° M, गजाश्वफु° B °दर्शनेन B 2a °तलदशनाः M कलविंग° B, कलपिङ्ग° M 3b °द्विनलविंशति° M 5a °नखांशान् M 5d श्याम° M 6a °वक्त्रकरमेष-विषाणान् M 6d °विरुद्ध° M 7b विप्रमुच्य M ऽपि Utpala 7c °मलिक्त° M 7d सर्पसत्त्व° Utpala 8a °करणाकनी M, °करणोपमं Utpala 8c श्रीबलार्थ° M 8d °शुष्क° M °रुचिरास्तु B

दक्षिणे शुभमतीव शोभनं पापमप्यतिविरूपमन्यतः ।
याप्यता भवति तद्विपर्यये विस्तरोऽन्यमुनिभिः प्रकीर्तितः ॥ ९ ॥

मूलमध्यदशनाग्रसंस्थिता देवदैत्यमनुजाः क्रमात्ततः ।
स्फीतमध्यपरिपेलवं फलं शीघ्रमध्यचिरकालसम्भवम् ॥ १० ॥

दत्तभङ्गफलमत्र दक्षिणे भूपदेशबलविद्रवप्रदम् ।
वामतः सुतपुरोहिते भयान् हन्ति साटविकदारनायकान् ॥ ११ ॥

आदिशेदुभयभङ्गदर्शनात् पार्थिवस्य सकलं कुलक्षयम् ।
सौम्यलग्नतिथिभादिभिः शुभं वर्धतेऽशुभमतोऽन्यथा भवेत् ॥ १२ ॥

क्षीरवृक्षफलपुष्पपादपेष्वापगातटविघट्टनेन वा ।
वाममध्यरदभङ्गखण्डने शत्रुनाशकृदतोऽन्यथापरम् ॥ १३ ॥

स्खलितगतिरकस्मात् त्रस्तकर्णोऽतिदीनः
श्वसिति मृदु सुदीर्घं न्यस्तहस्तः पृथिव्याम् ।
द्रुतमुकुलितदृष्टिः स्वप्नशीलो विलोमो
भयकृदहितभक्षी नैकशोऽसृच्छकृत्कृत् ॥ १४ ॥

Testimonia:

10 cited by Utpala on *BS* 93, 8 11-15 equal *BS* 93, 9-13 and *YY* 13, 10-14 14 - 15 and 13 cited by Utpala on *BS* 43, 17-18 14-15 equal *TY* 9, 9-10

Apparatus :

9b °विरुद्द° B 9d ऽस्य मुनिभिः M 10a °रदनाग्र° M 10b ततः क्रमात् M 10c पूर्ण° M °परितपलवं B, °परिपेलवाश्च M 10a-12b फलं to कुलक्षयं om. M 12d वदेत् *BS* 13a क्षीरमिष्ट° B, क्षीरमृष्ट° *BS* 13b °विघट्टितेन *BS* Utpala, °विघट्टने M ऽथ M 13c °मध्य° om. M °खंडनं BM 13d om. Utpala फलं *YY* 14a खलिगेतिर° M त्रस्तरूपो M 14b श्वसति *TY*, श्वसति M न्यस्तबाहुः M 14c द्दृ° B, om. M विलोमो om. M 14d शुत् सकृच्च B, मुतकृच्च M, सृक्शकृच्च Utpala



वल्मीकस्थाणुगुल्मक्षुपतरुमथनः स्वेच्छया हृष्टदृष्टि-
र्यायाद्यात्रानुलोमं त्वरितपदगतिर्वक्त्रमुन्नाम्य चोच्चैः ।
कक्षासन्नाहकाले जनयति च मुहुः शीकरं बृंहितं वा
तत्कालं वा मदाप्तिर्जयकृदथ रदं वेष्टयन् दक्षिणं च ॥ १५ ॥

**इति बृहद्यात्रायां गजलक्षणेङ्गिताध्याय एकविंशतिः ॥ ३६० ॥**

---

आवर्तसत्त्वद्युतिवर्णजातियानस्वराज्ञादिगुणोपपन्नाः ।
संक्षेपतोऽश्वा विजयाय राज्ञामावर्तलेशोपनयो यतोऽयम् ॥ १ ॥

अश्रुपातहनुगण्डहृद्गलप्रोथशङ्खकटिवस्तिजानुषु ।
मुष्कनाभिककुदे तथा गुदे सव्यकुक्षिचरणेषु चाशुभाः ॥ २ ॥

ये प्रपानगलकर्णसंस्थिताः पृष्ठमध्यनयनोपरिस्थिताः ।
ओष्ठवक्त्रिभुजकुक्षिपार्श्वगास्ते ललाटसहिताः सुशोभनाः ॥ ३ ॥

वालावकिरणहेषितधूमज्वालादि चोद्यमे लक्ष्यम् ।
तुरगाणामत्रार्याः प्रकीर्तिता विष्णुगुप्तकृताः ॥ ४ ॥

तत्रोत्सर्गेणासनपश्चिमभागाश्रये ज्वलनमेषाम् ।
नेष्टमितरत्र शस्तं वामेतरपार्श्वयोस्तद्वत् ॥ ५ ॥

15a °गुन्म° M °क्षुत° M, °तृण° *TY* °रुमथ° om. B 15b °मुन्नम्य B M *YY* 15c कक्ष्या M *BS* Utpala सुमहच्छीकरं M *YY TY* बृंहते *TY* 15d तत्काले *BS* मदाप्तौ *YY TY*, मभाप्तो M °णश्च M, °णं वा Utpala Col: इति om. B इति महायात्रायां हस्ति(स्ती) ङ्गितविधिः एकोनविंशोऽध्यायः M

Testimonia :

5 cited by Utpala on *BS* 92, 1

Apparatus

1a आवर्त्ति° B 1a-b °जातिषु यातुः M 1d °मावर्ति° B 2a अश्रुवात° M 2b °द्गले प्रोतशङ्खकरि° M 2c गुदेऽथवा M 3a प्रनाल° M 3c उष्टसक्ति° B, ओष्टवक्ति° M 4a °विकरण° B 4b °ज्वालाभिवोद्यमे M 4c-d °मंत्रर्याः प्रक्षिप्ता B 4d °गुप्ताकृताः B, गुप्तकराः M 5a °र्गासन्ने B, °र्गेणाघः M 5b °मेवम् Utpala 5d °स्तद्यत् B

सममन्यत् पदकेसरपुच्छेषु ज्वलनदहनकणधूमाः ।
राष्ट्रभयरोगसम्भ्रमसपत्नचक्रापमर्दकराः ॥ ६ ॥

प्राक्फलतुल्यं पृष्ठे जघने वालेषु चैव निर्दिष्टम् ।
अन्तःपुरप्रकोपो मेढ्रज्वलने सधूमे वा ॥ ७ ॥

नित्यं च वालकिरणे दाहज्वालास्फुलिङ्गकणधूमाः ।
स्कन्धासनांसदेशे वधाय बन्धाय च रणेषु ॥ ८ ॥

वक्षोक्षिललाटभुजेष्वश्वानां हेषतां च वदनेभ्यः ।
ज्वालोत्पत्तिर्जयदा धूमोत्पत्तिः स्वामिनोऽभावाय ॥ ९ ॥

नासापुटाश्रुपातप्रोथशिरोलोचनेषु रजनीषु ।
विजयाय प्रज्वलनं ताम्रासितहरितशवलानाम् ॥ १० ॥

विजयाय सर्वैदेव हि सुशुक्लशुकवर्णयोर्ज्वलनमेषु ।
एवं च यथासम्भवमन्येष्वपि वाहनेषु फलम् ॥ ११ ॥

इष्टानिष्टव्यंजकमतः परं हेषितं समवधार्यम् ।
तच्च प्रसारिताचलशिरोधरोद्भूतमिष्टफलम् ॥ १२ ॥

ग्रासान्तर्वक्त्राणामुच्चैः स्निग्धानुनादि गम्भीरम् ।
द्विजपूर्णभाजनेष्टद्रव्यसगन्धसुरमूलैः ॥ १३ ॥

Testimonia:

6-11 cited by Utpala on *BS* 92, 4 12-14 cited by Utpala on *BS* 92, 9

Apparatus :

6a सम्मध्यवादकेसर° M 6c °यशोकस° Utpala 6d °सत्न° B, प in marg. B[2], °सवर° M °वक्ता° Utpala °वमर्द° M, °पमर्दन° B 8b °लिङ्गश्चवधूमाः M, °लिङ्गानाम् Utpala 8d वधाय]धूमा Utpala 9a °क्षि° om. M 9b त्वश्वानां Utpala हेषिते M हेषितं Utpala च om. B 9d °त्पत्तिस्त्वभावाय M Utpala 10a °शुघात° B, °श्रुपाथ° M 10b °लोचने च Utpala 11a सर्वभैव M 11b °शुक° om. M °वर्णज्वलन° M °मेतेषु B 11d वाहने B 12b हेषितं Utpala समाधार्य M 12c तत्र B चलितप्रसारित° Utpala 13a °न्त-वक्त्रा° BM 13d °सगन्धि° Utpala °सूरमूलेव M



खलिनान्नपानवर्मस्वाम्युपकरणाभिनन्दिता चैषाम् ।
सर्वार्थसिद्धये स्याद्दक्षिणपार्श्वं विलोकयताम् ॥ १४ ॥
सन्ध्यासु दीप्तदिङ्मुखसम्भ्रमगाढप्रनष्टनिद्राश्च ।
हेषन्तो भयजनना वधबन्धपराजयकराश्च ॥ १५ ॥
वक्रीकृतवालधयो दक्षिणपार्श्वानुशायिनो नेष्टाः ।
वामचरणैः क्षितितलं घ्नन्तो ज्ञेयाः प्रवासाय ॥ १६ ॥
सजृम्भणं पृष्ठविधूननं च वालप्रकारस्त्वसकृल्लिलिक्षोः ।
पादेन पादाकलनं प्रसङ्गः सेनासमुद्योगदृशां हयानाम् ॥ १७ ॥
निद्रानिरोधालसनीलनेत्राः प्रध्यानशून्यस्मृतयो दिनेषु ।
निशासु चान्योन्यविरोधनष्टनिद्रास्तुरङ्गा न शिवाय भर्तुः ॥ १८ ॥
जंघे लिहन्व्रणरोमपङ्के पादौ च संहृष्टतनुर्जयाय ।
विपर्ययः पश्चिमयोः प्रयत्नात् स्वयं तु यात्राभिमुखो नियम्य ॥ १९ ॥
मुहुर्मुहुर्मूत्रशकृत् करोति न ताड्यमानोऽप्यनुलोमयायी ।
अकार्यभीतोऽश्रुविलोचनश्च शिवं न भर्तुस्तुरगो विधत्ते ॥ २० ॥
आरोहति क्षितिपतौ विनयोपपन्नो यात्रानुगोऽन्यतुरगं प्रतिहेषितश्च ।
वक्त्रेण वा स्पृशति दक्षिणमात्मपार्श्वं योऽश्वः स भर्तुरचिरात् प्रतनोति लक्ष्मीम् ॥२१

**इति बृहद्यात्रायां वाजिलक्षणेङ्गिताध्यायो द्वाविंशः॥ ३८१ ॥**

Testimonia :

15-16 cited by Utpala on *BS* 92, 11c 18 cited by Utpala on *BS* 92, 5 20-21=*TY* 9, 8+7=*YY* 15, 16+15=*BS* 92, 14+13; cited by Utpala on *BS* 43, 17-18 and By Śivarāja on P. 216.

Apparatus:

14a सितान्नपान° M °चर्म° M, °धर्म° Utpala 14b ऽभिर्यदीनामेषां B, °दिमुदितं चैषां M 14d °पार्श्वे Utpala 15a सस्यासु M 15b °ढप्र° om. M 15c हेषन्तो Utpala 17c-d पदा च पादावनप्रसङ्गः ननादमुद्योग° M 18b प्रधान° B, प्रध्वास° M 18c-d °निद्रानष्टा° Utpala 19a लिहन्त्य° M 19b संहृष्टतरं M 19d °मुखो यदि स्यात् M 20a °मूत्रमलं Śivarāja 20b न om. M 20d गन्तुस्तुरगे M ऽभिधत्ते *YY*, *TY*, *BS*, Utpala, Śivarāja 21b ऽन्यहयहेषणहेषितश्च M प्रतिहेषितं च B, प्रतिहेषते च *BS* Utpala 21c वक्त्रौ वा M दक्षिणवामपार्श्वं M 21d प्रचिनोति M *YY*, *TY*, *BS* col. इति om. B इति महायात्रायां अश्वेङ्गितविधिर्नाम विंशोऽध्यायः M

अन्यजन्मान्तरकृतं पुंसां कर्म शुभाशभम् ।
यत्तस्य शकुनः पाकं निवेदयति गच्छताम् ॥ १ ॥

ग्राम्यारण्याम्बुभूव्योमद्युनिशोभयचारिणः ।
रुतयातेक्षितोक्तेषु ग्राह्याः पुंस्त्रीनपुंसकाः ॥ २ ॥

पृथग्जात्यनवस्थानादेषां व्यक्तिर्न लभ्यते ।
सामान्यलक्षणोद्देशे श्लोकावृषिकृताविमौ ॥ ३ ॥

पीनोन्नतविकृष्टाङ्गाः पृथुग्रीवाः सुवक्षसः ।
स्वल्पगम्भीरविरुताः पुमांसः स्थिरविक्रमाः ॥ ४ ॥

तनुग्रीवशिरोनासाः सूक्ष्मास्यपदविक्रमाः ।
प्रसन्नमृदुभाषिण्यः स्त्रियोऽतोऽन्यं नपुंसकम् ॥ ५ ॥

ग्राम्यारण्यप्रचाराद्यं लोकादेवोपलक्षयेत् ।
संविक्षिप्सुरहं वच्मि यात्रामात्रप्रयोजनम् ॥ ६ ॥

पथ्यात्मानं नृपं सैन्ये पुरे चोद्दिश्य देवताम् ।
सार्थे प्रधानं साम्ये तु जातिविद्यावयोधिकम् ॥ ७ ॥

मुक्तप्राप्तैष्यसूर्यासु फलं दिक्षु तथाविधम् ।
अङ्गारदीप्तधूमिन्यस्ताश्च शान्तास्ततोऽपराः ॥ ८ ॥

तत्पञ्चमदिशां तुल्यं फलं त्रैकाल्यमादिशेत् ।
परिशेषदिशोर्वाच्यं यथासन्नं शुभाशुभम् ॥ ९ ॥

**Testimonia :**

1 cited by Sivarāja (p. 211) and by Govinda on *MO* 11, 100-101 6 cited by Utpala on *By* 13, 10

**Apparatus :**

1n M 23 follows 30, 3 1b कर्म पुंसां M Sivarāja शुभं वा यदि वाशुभं Govinda 1c पाकं शकुनो Govinda 1d गच्छतः Sivarāja 2d स्त्रीपुंन° M 3a पृथग्गाश्य° B, पृथक्जात्य° M 3a-b °स्थानां एषां M 3c-d °लक्ष्यते देशश्लोकावृष्टि° M 4a °विकृष्वांसाः B 4c °विनुताः M 5a °शिरोरस्काः BM 5c प्रसक्त° B 7a पश्यमानं M 7c प्रदानं M साम्येषु M 8d °स्ततः परः M 9b °माविशेत् B 9c-d om. M



शीघ्रमासन्ननिम्नस्थैश्चिरादुन्नतदूरगैः ।
स्थानवृध्द्युपघाताश्च तद्वद्ब्रूयात् फलं बुधः ॥ १० ॥

क्षणतिथ्युडुवातार्कैर्दैवदीप्तो यथोत्तरम् ।
क्रियादीप्तो गतिस्थानभावस्वरविचेष्टितैः ॥ ११ ॥

दशधैवं प्रशान्तोऽपि सौम्यस्तृणफलाशनः ।
मांसामेध्याशनो रौद्रो विमिश्रोऽन्नाशनः स्मृतः ॥ १२ ॥

हर्म्यप्रासादमाङ्गल्यमनोज्ञस्थानसंस्थिताः ।
श्रेष्ठा मधुरसक्षीरफलपुष्पद्रुमेषु च ॥ १३ ॥

स्वकाले गिरितोयस्था बलिनो द्युनिशाचराः ।
क्लीवस्त्रीपुरुषाश्चैव बलिनः स्युर्यथोत्तरम् ॥ १४ ॥

जवजातिबलस्थानहर्षसत्त्वैर्बलान्विताः ।
स्वभूमावनुलोमाश्च तदूनाः स्युर्विवर्जिताः ॥ १५ ॥

कक्कुटेभचिरिल्ह्यश्च शिखिवञ्जुलच्छिक्कराः ।
बलिनः सिंहनादाश्च कूटपूरी च पूर्वतः ॥ १६ ॥

क्रोष्टुकोलूकहारीतकाककोकर्क्षपिङ्गलाः ।
कपोतरुदिताक्रन्दक्रूरशब्दाश्च याम्यतः ॥ १७ ॥

गोशशक्रौञ्चलोमाशहंसोत्क्रोशकपिञ्जलाः ।
विडालोत्सववादित्रगीतहासाश्च वारुणाः ॥ १८ ॥

**Testimonia :**

16-19 cited by Govinda on *MO* 11, 106

**Apparatus :**

11a °पारार्कैं° M 11c क्रीडादीप्तो M 12b °फलाशिनः M 12c °मेध्याशिनो M 12d विमिश्रां नाशनस्तदा M 14c °श्चैषां B 15a एवं जाति° M 15a-b °स्थान...हर्षस्वरान्विताः M 16a कक्कुटेभगिरिल्यश्च B, कक्कुटेभविरिल्यश्च M, कुक्कुटेभचिरल्वाश्च Govinda 16b °वंचुल° M °छित्कराः B, °सित्कताः M, °छिक्कराः Govinda 16d कूटी पूरी M 17a-b कोष्ठकोलूककाकोक्ष...पिङ्गलाः M 18b °हंसोरग° M, °हंसक्रोश° Govinda 18c विलालो° M, विलोमो° Govinda

शतपत्रकुरङ्गाखुमृगैकशफकोकिलाः ।
चाषशल्यकपुण्याहघण्टाशंखरवा उदक् ॥ १९ ॥

न ग्राम्योऽरण्यगो ग्राह्यो नारण्यो ग्रामसंस्थितः ।
दिवाचरो न शर्वर्यां न च नक्तंचरो दिवा ॥ २० ॥

द्वन्द्वरोगार्दितत्रस्तकलहामिषकांक्षिणः ।
आपगान्तरिता मत्ता न ग्राह्याः शकुनाः क्वचित् ॥ २१ ॥

रोहिताश्वाजवालेयकुरङ्गोष्ट्रमृगाः शशाः ।
निष्फलाः शिशिरे ज्ञेया वसन्ते काककोकिलौ ॥ २२ ॥

न तु भाद्रपदे ग्राह्याः सूकराश्व वृकादयः ।
शरद्यब्जादगोक्रौञ्चाः श्रावणे हस्तिचातकौ ॥ २३ ॥

व्याघ्रर्क्षवानरद्वीपिमहिषाः सबिलेशयाः ।
हेमन्ते निष्फला ज्ञेया बालाः सर्वे विमानुषाः ॥ २४ ॥

ऐन्द्रानलदिशोर्मध्ये त्रिभागेषु व्यवस्थिताः ।
कोशाध्यक्षानला जीवितपोयुक्ताः प्रदक्षिणम् ॥ २५ ॥

शिल्पी भिक्षुर्विवस्त्रा स्त्री याम्यानलदिगन्तरे ।
परतश्चापि मातङ्गगोपधर्मसमाश्रयाः ॥ २६ ॥

नैर्ऋतीवारुणीमध्ये प्रमदाः सूतितस्कराः ।
शाक्तिकः शाकुनिर्हिंस्रो वायवीपश्चिमान्तरे ॥ २७ ॥

Testimonia :

20-24 cited by Govinda on *MC* 11, 107  30 equals *BY* 24, 3

Apparatus :

19b °कशर्प° B  19c गव° B, चाष्ट° M  19d °शल्यरवा M  20a नच ग्राम्यो वने Govinda  21a °र्दितस्तल Govinda  22a रोहिताश्वाज° M, रोहितास्वज° Govinda  23a तु ] च M ग्राम्यास् M  23b सूकरश्व B 23c वृक्षादयः क्रौंचाः Govinda  24d ऽपि मानुषाः M  27c शौर्णिकः B शाकुनी B



विषघातकगोस्वामिकुहकज्ञास्ततः परम् ।
धनवानीक्षणीकश्च मालाकारस्ततः परम् ॥ २८ ॥

वैष्णवश्चरकश्चैव वाजिनां रक्षणे रतः ।
एवं द्वात्रिंशतो भेदाः पूर्वदिग्भिः सहोदिताः ॥ २९ ॥

राजा कुमारो नेता च दूतः श्रेष्ठी चरो द्विजः ।
गजाध्यक्षश्च पूर्वाद्याः क्षत्रियाद्याश्चतुर्दिशः ॥ ३० ॥

गच्छतस्तिष्ठतो वापि दिशि यस्यां व्यवस्थितः ।
विरौति शकुनो वाच्यस्तद्दिग्जेन समागमः ॥ ३१ ॥

भिन्नभैरवदीनार्तपरुषाक्षमजर्जराः ।
स्वरा नेष्टाः शुभाः शान्ता हृष्टप्रकृतिपूरिताः ॥ ३२ ॥

शिवाश्यामारलाछुच्छुपिङ्गलागृहगोधिकाः ।
सूकरी परपुष्टा च पुन्नामानश्च वामतः ॥ ३३ ॥

स्त्रीसंज्ञा भासभषककपिश्रीकर्णच्छित्कराः ।
शिखिश्रीकण्ठपिप्पीकारुरुश्येनाश्च दक्षिणाः ॥ ३४ ॥

क्ष्वेडास्फोटितपुण्याहगीतशंखाम्बुनिःस्वनाः ।
सतूर्याध्ययनाः पुंवत् स्त्रीवदन्या गिरः शुभाः ॥ ३५ ॥

Testimonia :

33 cited by Govinda on *MC* 11, 105  34 = *TY* 9, 20 and cited by Govinda on *MC* 11, 106.

Apparatus :

28a वृषस्रातक° M  28c °क्षणीका च B  28d °काराः परस्ततः M  30b श्रेष्ठश्चरो M  31d °द्दिकृस्थेन M  32a °दानार्ति° B  32b परुषक्षामजर्जराः B, परुषाः क्षामन्धर्जराः M  32c-d नेष्टास्स्वनारशुभारशान्ताश्शिष्टाः प्रकृतिपूजिताः M  33a °शामा° B, °श्यमा° M °छुछु° B, °चुच्छु° M  34a °ज्ञाश्चाष° Govinda  34b °पिंजलाप्लवकम्बुकिंत्सका *TY*, °कपिश्रीकण्ठवित्कराः M, °पिकश्रीकर्णछिक्कराः Govinda °कपिश्रीकर्णछित्कराः B  34c °कष्ठपयीक° *TY*, °कण्ठपिप्याक° B, °कण्ठविप्फाक° M, °कण्ठपिकक° Govinda  34d दक्षिणे M, दक्षिणाश्च × *TY*  35a क्ष्वेलास्फोटनवादित्र° M  35c तुर्याध्ययनाः M  35d °दन्य M

ग्राम्यौ मध्यमषड्जौ तु गान्धारश्चेति शोभनाः ।
षड्जौमध्यमगान्धारा ऋषभश्च स्वरा हिताः ॥ ३६ ॥

रुतकीर्तनदृष्टेषु भारद्वाजाजबर्हिणः ।
धन्यौ नकुलचाषौ च सरटः पापदोऽग्रतः ॥ ३७ ॥

जाहकाहिशशक्रोडगोधानां कीर्तनं शुभम् ।
रुतसंदर्शनं नेष्टं प्रतीपं वानरर्क्षयोः ॥ ३८ ॥

ओजाः प्रदक्षिणं शस्ता मृगाः सनकुलाण्डजाः ।
चाषं सनकुलं वामं भृगुराहापराह्णतः ॥ ३९ ॥

छित्करः कूटपूरी च पिरिली(?) चाह्नि दक्षिणाः ।
अपसव्यं सदा शस्ता दंष्ट्रिणः सविलेशयाः ॥ ४० ॥

श्रेष्ठे हयसिते प्राच्यां शवमांसे च दक्षिणे ।
कन्दकादधिनी पश्चादुदग्गा विप्रसाधवः ॥ ४१ ॥

जालश्वचरणौ नेष्टौ प्राग्याम्ये शस्त्रघातकौ ।
पश्चादासवषण्डौ च खलासनहलान्युदक् ॥ ४२ ॥

कर्मसङ्गमयुद्धेषु प्रवेशे नष्टमार्गणे ।
यानव्यत्यस्तगा ग्राह्या विशेषश्चात्र कथ्यते ॥ ४३ ॥

दिवा प्रस्थानवद्ग्राह्याः कुरङ्गरुरुवानराः ।
अह्नस्तु प्रथमे भागे चाषवञ्जुलकुक्कुटाः ॥ ४४ ॥

Testimonia:

39a-b cited by Govinda on *MC* 11, 107

Apparatus:

36a ग्रामौ मध्यमषट्कौ च M 36c षट्ज(च)° M 36c-d गान्धारऋषभाश्च B 37c धन्येन कुलचाष्टौ M 38c चुतं B 39a प्रदक्षिणाश्शस्ताM 39b मृगाश्वनकुला° Govinda 39c चाषस्सनकुलो वामे M 39d °पराह्णतः B 40a चीत्करः कूटपूती M 40b विरिली चाग्नि दक्षिणे M 40c अपसव्यास्सदा M 40d दंष्ट्रिणः].........M 41b शिवमांसौ M 41c कन्यका° M 42a जालश्वरणौ M 42b शस्त्रि° M 43c यानव्यस्तगता B 44c अह्नश्च M 44d °वंचुल° M



पश्चिमे शर्वरीभागे नप्तृकोलूकपिङ्गलाः ।
सर्व एव विपर्यस्था ग्राह्याः सार्थेषु योषिताम् ॥ ४५ ॥

नृपसन्दर्शने ग्राह्याः प्रवेशोऽपि प्रयाणवत् ।
गिर्यरण्यप्रवेशेषु नदीनां चावगाहने ॥ ४६ ॥

वामदक्षिणगौ शस्तौ यौ तु तावग्रपृष्ठगौ ।
क्रियादीप्तौ विनाशाय यातुः परिघसंज्ञितौ ॥ ४७ ॥

तावेव तु यथाभागं प्रशान्तरुतचेष्टितौ ।
शकुनौ शकुनद्वारसंज्ञितावर्थसिद्धये ॥ ४८ ॥

केचित्तु शकुनद्वारमिच्छन्त्युभयतः स्थितैः ।
शकुनैरेकजातीयैः शान्तचेष्टाविराविभिः ॥ ४९ ॥

विसर्जयति यद्येक एकश्च प्रतिषेधति ।
सविरोधोऽशुभो यातुर्ग्राह्यो वा बलवत्तरः ॥ ५० ॥

पूर्वं प्रावेशिको भूत्वा पुनः प्रास्थानिको भवेत् ।
सुखेन सिद्धिमाचष्टे प्रवेशे तद्विपर्ययात् ॥ ५१ ॥

विसृज्य शकुनःपूर्वं स एव निरुणद्धि चेत् ।
प्राह यातुररेर्मृत्युं समरं रोगमेव च ॥ ५२ ॥

अपसव्यास्तु शकुना दीप्ता भयनिवेदिनः ।
आरम्भे शकुनो दीप्तो वृषान्ते तद्भयंकरः ॥ ५३ ॥

तिथिवाय्वर्कभस्थानचेष्टादीप्ता यथाक्रमम् ।
घनसैन्यबलाङ्गेष्टकर्मणां स्युर्भयंकराः ॥ ५४ ॥

Apparatus

45a शर्वरीपश्चिमे भागे B 45d योषित् M 46b ऽपि] च M 46c °प्रवेशे च M 47d °संस्थितौ M 48e पापेव M 48d °संस्थिताव° M 49a-b °द्वारं वदन्त्युभयसंस्थितैः M 49d °विदोधिभिः B 51c सखेन M 52d चमरं B 53d विषांतिस्तद्भ° B 54a °वारर्क्षभ° M 54c °सैंद° B

जीमूतध्वनिदीप्तेषु भयं भवति मारुतात् ।
उभयोः सन्ध्ययोर्दीप्ताः शस्त्रोद्भवभयंकराः ॥ ५५ ॥

चिताकेशकपालेषु मृत्युबन्धवधप्रदाः ।
कण्टकीकाष्ठभस्मस्थाः कलहायासदुःखदाः ॥ ५६ ॥

अप्रसिद्धिं भयं वापि निःसाराश्मव्यवस्थिताः ।
कुर्वन्ति शकुना दीप्ताः शान्ता याप्यफलास्तु ते ॥ ५७ ॥

आसिद्धिसिद्धिदौ ज्ञेयौ निर्हाराहारकारिणौ ।
स्थानात्क्रोशन् व्रजेद्यात्रां शंसते त्वन्यथागमम् ॥ ५८ ॥

कलहः स्वरदीप्तेषु स्थानदीप्तेषु विग्रहः ।
उच्चमादौ ध्वनिं कृत्वा नीचं पश्चाच्च दोषकृत् ॥ ५९ ॥

एकस्थाने रुवन् दीप्तः सप्ताहाद्ग्रामनाशकृत् ।
पुरदेशनृपाणां च ऋत्वर्धायनवत्सरात् ॥ ६० ॥

सर्वे दुर्भिक्षकर्तारः स्वजातिपिशिताशनाः ।
सर्पमूषिकमार्जारपृथुरोमविवर्जिताः ॥ ६१ ॥

परयोनिषु गच्छन्तो मैथुनं देशनाशनाः ।
अन्यत्र वेशरोष्ट्रेभ्योर्नृणां वाजातिमैथुनात् ॥ ६२ ॥

बन्धघातवधानि स्युः पादोरुमस्तकाभिगैः ।
अप्सस्यपिशितान्नाद्यैर्वर्गमोषक्षतग्रहाः ॥ ६३ ॥

इष्टं वा गोरसान्नं वा भारद्वाजस्य दर्शने ।
चाषस्य पूर्णवक्त्रस्य महान् लाभः प्रदक्षिणे ॥ ६४ ॥

Apparatus

56a चिति° M 56b मृत्युबन्धुभयप्रदाः M 57a चापि M 57d याप्यकला° B 58b °कांक्षिणौ M 58c स्थानाद्वासन् B 58c-d व्रजन यात्रां सते त्व° M 59a कलहिः B 59c स्वरं M 59d मोषकृत् B 60b °द्ग्रामघातकृत् M 62d नृपाणामतमैथुनात् M 63a °घातभयानि B 63b पादोरो° B M °मस्तकाहतैः M 63c अग्नुपपिशि° M 63d °र्वंषमोषक्षतग्रहाः M 64c चाबस्य पूर्व° M



वामदक्षिणगः श्रेष्ठः पुरस्ताच्च कपिंजलः ।
तित्तिरिः पृष्ठतः श्रेष्ठः सर्वत्रान्यत्र गर्हितः ॥ ६५ ॥

अनुलोमो वृषो नर्दन् धन्यो गौर्महिषस्तथा ।
गमनप्रतिषेधाय खरः प्रत्युरसि स्थितः ॥ ६६ ॥

उलूकी वामतः क्षेम्या दक्षिणेन च कोकिला ।
शर्करिश्च (?) मयूरश्च शस्यते दक्षिणे सदा ॥ ६७ ॥

वृकाः शृगालाः शार्दूला विडाला गर्दभाः शुनः ।
वामतोऽर्थकरा ज्ञेयाः कुरङ्गा दक्षिणेन च ॥ ६८ ॥

रिक्तकुम्भोऽनुकूलश्च शस्तोऽम्भोर्थी यियासतः ।
चौर्यविद्यावणिग्वित्तमुद्यतानां विशेषतः ॥ ६९ ॥

(इति) बृहद्यात्रायां शकुनशुभाशुभाध्यायस्त्रयोविंशः ॥ ४५० ॥

---

पृष्ठतः पूजिता शान्ता शिवा मांसास्थिवर्जिता ।
क्रूरशब्दातिदीप्ता च क्रूरकर्मणि पूजिता ॥ १ ॥

पूर्वोदीच्योः शिवा शस्ता शान्ता सर्वत्र पूजिता ।
धूमिताभिमुखी हन्ति स्वरदीप्ता दिगीश्वरान् ॥ २ ॥

Apparatus:

the order in M is : 65c-d, 66, and 65a-b 65a °दक्षिणतः M 65d सर्वत्राप्यनुलोमगः M 66a अनुलोपुषो नर्दं M, लोमो वृक्षो गन्तु° M² 66d परात्रृत्युरसि M, परे प्रत्युरसि M² The order of verses after 66 in M is: 25, 11-16; 25, 4-10 ; 25, 1-3; 23, 64; and 23, 66-69. 67b गमनेन M कोकिलः M 67c कर्करीश्च M 68b विलाला M शशाः M 69a ऽनुलोमश्च M 69b ऽम्भोर्थमिति यासतः M 69c-d चौर्यवाणिज्यविद्यार्थाभ्युद्यतानां M col. om. M

In M 24 follows 23, 69. 1a शस्ता M 1c °शब्दाश्च दीप्ताश्च M

[राजा कुमारो नेता च दूतः श्रेष्ठी चरो द्विजः ।
गजाध्यक्षश्च पूर्वाद्याः क्षत्रियाद्याश्चतुर्दिशम् ॥ ३ ॥]

सर्वदिक्ष्वशुभा दीप्ता विशेषेणाह्नयशोभना ।
पुरे सैन्येऽपसव्या च कष्टा पूर्वोन्मुखा शिवा ॥ ४ ॥

याहीत्यग्निभयं शास्ति टाटेति मृतिचोदिता ।
धिग्धिक् दुष्कृतमाचष्टे सज्वाला देशनाशिनी ॥ ५ ॥

नैव दारुणतामेके स्वज्वालायाः प्रचक्षते ।
अर्काद्यनलवत्तस्या वक्त्राज्ज्वाला स्वभावतः ॥ ६ ॥

अन्यप्रतिरुता याम्या सा बन्धवधशंसिनी ।
वारुण्याभिरुता सैव शंसते सलिले मृतिम् ॥ ७ ॥

अक्षोभ्यश्रवणं चेष्टं धनप्राप्तिः प्रियागमः ।
क्षोभात् प्रधानभेदश्च वाहनानामसम्पदः ॥ ८ ॥

फलमा सप्तमादेतदग्राह्यं परतो रुते ।
याम्यायां तद्विपर्यस्तं फलं षट्पञ्चमाद्रुते ॥ ९ ॥

या रोमांचं मनुष्याणां शकृन्मूत्रं च वाजिनाम् ।
रावात् त्रासं च जनयेत् सा शिवा न शिवप्रदा ॥ १० ॥

मौनं गता प्रतिरुते नरद्विरदवाजिभिः ।
या शिवा सा शिवं सैन्ये पुरे वा संप्रयच्छति ॥ ११ ॥

(इति) बृहद्यात्रायां शिवारुतनामाध्यायश्चतुर्विंशः ॥ ४६१ ॥

---

Testimonia :

3 equals 23, 30

3 om. M 4b °णाह्नशो° B, °णाह्यशो° M 4d सर्पोन्मुखा B 5b टेटेति M मृतवेदिका M 6b सज्वालायां M 6c अर्काग्न्यनिलव° M 6c-d °तस्माद्वक्त्रां B, °तस्या वक्त्रं M 6d लाला M 7b सोत्बन्धमृत° M, सा बन्धुवध° B 7c आरुण्यनिरुता M 8a अयोभ्य° B, अक्षोभ° M 8c क्षोभः M 8d °नानां च सम्पदः M 9a-b सप्तमादेदग्राह्यं M 9b रुतं B, रुतः M 9d वदपंचमा° B °द्रुते B M 10a यो B M 10c च om. M



शस्तो नीडस्तु वैशाखे पादपे निरुपद्रवे ।
देशोत्थानं तु वल्मीकचैत्यधान्यगृहादिषु ॥ १ ॥

काकानां श्रावणे द्वित्रिचतुःशावाः शुभावहाः ।
गैरिकश्वेतचित्राश्च वर्णाश्चौराग्निमृत्युदाः ॥ २ ॥

अण्डावकिरणे ध्वांक्षा दुर्भिक्षमरकावुभौ ।
शावानां विकलत्वे वा निःशावत्वे कृताथवा ॥ ३ ॥

हरेदुपनयेद्वापि यद्द्रव्यं वायसोऽग्रतः ।
तन्नाशलब्धौ विज्ञेयौ हेमपीते विनिर्दिशेत् ॥ ४ ॥

रक्तद्रव्यं प्रदग्धं वा न्यसन् गेहेऽग्निदः स्मृतः ।
तृणभस्मास्थिकेशांश्च शयने स्वामिमृत्युदः ॥ ५ ॥

पुरसैन्योपरि व्योम्नि व्याकुलैरनिलाद्भयम् ।
सव्यमण्डलगैः स्वार्थमपसव्यैः परोद्भवम् ॥ ६ ॥

अकार्यसहितैर्भेदो रोधश्चक्राकृतिस्थितैः ।
वर्गतश्चाभिघातः स्याद्रिपुवृद्धिश्च निर्भयैः ॥ ७ ॥

---

Testimonia

1 cited by Utpala on *BS* 94, 5 2-3 cited by Utpala on *BS* 94, 7 4 cited by Utpala on *BS* 94, 15 5a-b cited by Utpala on *BS* 94, 18 5c-d cited by Utpala on *BS* 94, 12 6 cited by Utpala on *BS* 94, 10 7 cited by Utpala on *BS* 94, 8

Apparatus

In M the order is 25, 11-16 (25, 11 follows 23, 66); 25, 4-10; 25, 1-3 1a नीलस्तु M 1b °पद्रवे om. B 1c देशोत्सादस्तु B 1d °ग्रहादिषु B, °शहादिषु M 2a कालानां B 2c गेरकश्वेतचित्राश्च B, पोरकश्वतचित्राश्च M, चोरचित्रकश्वेताश्च Utpala 3a अस्मावकिरणे ध्वोक्षा B, अण्डन्धावकिरण ध्वांक्षो M 3b °मरणावुभौ M 3d निःसावैकाण्डताथवा B 4c तत्प्राप्तिनाशौ B 4d हेमपात्रे B 5a च Utpala 5b न्यसन्] धान्यंUtpala 5c °स्मस्थिकेणांश्च B 6c स्वोत्थ° Utpala 6d पराद्भयम् M Utpala 7a °संहति° B, °संहत° Utpala 7b क्रोध° M °स्थितिः B 7c वहुतः स्वा° B, वर्गगैश्चा° Utpala 7d निर्दयैः M

उपानच्छत्रयानाङ्गशस्त्रच्छायावकुट्टने ।
मृत्युं तत्स्वामिनो ब्रूयात् पूजा स्यात् तत्प्रपूजने ॥ ८ ॥

काष्ठरज्ज्वस्थिनिःसारकेशकण्टकभृद्रुवन् ।
व्यालाहिव्याधिशस्त्राग्नितस्करेभ्यो भयङ्करः ॥ ९ ॥

युद्धं सेनाङ्गसंस्थेषु मोषकृत् स्वावलेखने ।
चरन्निशि विनाशाय दुर्भिक्षं धान्यमोषकृत् ॥ १० ॥

वामपार्श्वस्थितः श्रेष्ठो दक्षिणाद्वापि वामगः ।
ध्वांक्षः पार्श्वद्वयेनापि शस्तो यात्रानुलोमगः ॥ ११ ॥

यातुः कर्णसमो ध्वांक्षः क्षेम्यो नार्थप्रसादकः ।
वामदक्षिणगो नेष्टो वा समानः प्रतीपगः ॥ १२ ॥

विरुवन् चाग्रतः पक्षे धून्वन् ध्वांक्षो भयप्रदः ।
प्रत्युरस्युपसर्पन् च संस्पर्शन् च तथा भवेत् ॥ १३ ॥

एकपादो चलत्पक्षः काको ऽवस्कन्दखेटकः ।
वधबन्धकरो वाशन् खरसूकरपृष्ठगः ॥ १४ ॥

**Testimonia**

8 cited by Utpala on *BS* 94, 14 9 cited by Utpala on *BS* 94, 40 10 cited by Utpala on *BS* 94, 11 11a-b cited by Utpala on *BS* 94, 29 12a-b cited by Utpala on *BS* 94, 25 14c-15 cited by Utpala on *BS* 94, 47

**Apparatus**

8a उपानदछत्र° B, उपानच्छस्त्र° Utpala °यात्रा° M 8b °च्छत्र° Utpala °वकूतने B, °वकुट्टनैः M 9a °रजुस्थि° B, °रज्ज्वग्नि° M 9b °कन्दक° M, °कण्टकि° Utpala °भूद्रवन् B, °भृत् क्वणन् M 9c यानाहि° B 10a °संस्थे तु M 10B °कस्त्वावलेखने M, °कृत् स्वविलेखने Utpala 10d यान्य° M, चान्न° Utpala 11a °स्थितियाति Utpala 12b क्षेमे नार्थप्रसाधकः Utpala 12c निष्ठो B 12d पवमानः M 13a ब्रुवं चा° B, विरूपंश्चा° M 13b ध्वन्वन B 13c °रसुप° B, °रसि उप° M 13c-d °सर्पंश्च संस्पर्शंश्च B M 14b काल्पो B ऽवस्कन्दचोदकः M 14c वासन् B, क्रोशन् Utpala 14d परसूकर° M



पङ्कदिग्धशरीरस्य वराहस्योपरिस्थितः ।
वायसः शस्यते यातुस्तूष्णीभूतो रुवन्नपि ॥ १५ ॥

क्षीरवृक्षाजमहिषीगोस्थितो गोरसप्रदः ।
अन्नदः पर्णविच्छेदी पानदो जलकुट्टनात् ॥ १६ ॥

**(इति) बृहद्यात्रायां वायसेङ्गिताध्यायः पंचविंशः ॥**

नृहयातपवारणेभशस्त्रध्वजदेहानवमूत्रयन् जयाय ।
सभयो विचरन् विना निमित्तं न शुभश्चाभिमुखो भषन् लिखन् गाम् ॥१॥

उच्चैर्भषणं समागतानां दीनं वाभिरुतं रविं निरीक्ष्य ।
संघरदनजृम्भणे च नेष्टे प्रस्थानेषु तथा विधूननं च ॥ २ ॥

पूर्णास्यत्वं घ्रायकत्वं च यातुः प्रादक्षिण्यं मैथुनं चानुलोमम् ।
यात्राकाले सारमेयस्य शस्तं पद्भ्यां मूर्ध्नः स्वस्य कण्डूयनं च ॥ ३ ॥

**(इति) बृहद्यात्रायां श्वेङ्गिताध्यायः षड्विंशः ॥**

सिद्धार्थकादर्शपयोंजनानि बद्धैकपश्वामिषपूर्णकुम्भाः ।
उष्णीषभृङ्गारनृवर्द्धमानपुंयानवीणातपवारणानि ॥ १ ॥

**Apparatus**

15c-d यातुतुष्णी° B, यातूर्णीं° M 16c पंत्रछेदी B 16d पानभो M °कूटनात् M col. om. M

In M 26, 1-3 fallow 24, 11 1a नरहया° M 1b °देहानमूत्रयन् M 1c चीरन् M 1d शुभ in Marg. B शुभं चा° M भसन् B लिखन् om. M गं B 2a उच्चरभषण B, उच्चैर्भाषणं M 2c संघरदनं विजृम्भणं B, संछर्दनजृम्भणे M नेष्टं B 3a घ्राहयकत्वं M 3b प्रदक्षिण्यं B चानलाभ्यं B, चानुलोम्यं M 3d मुर्द्धना B

**Testimonia**

1-6=*TY* 9, 11-16 =*YY* 17, 10-15 1a cited by Utpala on *BS* 42, 12

**Apparatus**

In B the order is 6; 1-5 In M chapter 27 follows 28, 1 1a °दश° in marg. B °पयोमृंगां° B, °मयां° Utpala 1b विध्यैक° B 1c °ण° B, °नु° M

दधिमधुघृतरोचनाकुमार्यो ध्वजकनकाम्बुजभद्रपीठशंखाः ।
सितवृषकुसुमाम्बराणि मीना द्विजगणकाप्तजनाश्च चारुवेषाः ॥ २ ॥

ज्वलितशिखिफलाक्षतेक्षुभक्ष्या द्विरदमृदङ्कुशचामरायुधानि ।
मरकतकुरुविन्दपद्मरागस्फटिकमणिप्रमुखाश्च रत्नभेदाः ॥ ३ ॥

स्वयमथ रचितान्ययत्नतो वा यदि कथितानि भवन्ति मङ्गलानि ।
स जयति सकलां ततो धरित्रीं ग्रहणद्दगालभनश्रुतैरुपास्य ॥ ४ ॥

कार्पासौषधकृष्णधान्यलवणक्लीवास्थितैलावसाः
पङ्काङ्गारगुडाहिचर्मशकृतः क्लेशाय सव्याधिताः ।
वातोन्मत्तजडेन्धनं तृणतुषक्षुत्क्षामतक्रारयो
मुण्डाभ्यक्तविमुक्तकेशपतिताः काषायिनश्चाशुभाः ॥ ५ ॥

पटुपटहमृदङ्गशंखभेरीपणवरवं सपताकतोरणाग्रम् ।
प्रचुरकुसुमतोयशान्तरेणुं सुरभिसुवेषजनं व्रजेच्च मार्गम् ॥ ६ ॥

इति बृहद्यात्रायां मङ्गलामङ्गलनामाध्यायः सप्तविंशः ॥

---

Testimonia

4 cited by Govinda on *MC* 11, 100-101  5 cited by Govinda on *MC* 11, 102-103

Apparatus

2c °वृक्षकुश्माम्ब° B निना B, मीन° M °गणिका° *TY*, *YY*, °कुसुमा° M  3a °शिखिशिक्षाक्षितेक्षु° M °भक्षा *TY*  3c °पद्मरागा: B, °पलाश° M  4d °दुर्ग° B, °गदा° M, °दृशां Govinda श्रुतिपाठतो यथाह Govinda 5a °क्षीवा° M °तैलावशा: B, °तैलम्बसा M, *TY*, *YY*, °तालानलं Govinda 5b सर्पा° Govinda °गराहि° Govinda °प्रवृता: Govida केशारि° Govinda 5c वान्तोन्नत° B, भ्रान्तो मन्त° M, मत्तोन्मत्त° *TY* °जलेन्धनोपलतुषकृत्° M, °जडीकृतान्धबधिरक्षुत्° *TY*, °जडान्धकास्तृणतुषक्षुत्° Govinda °श्याम° B 6a °हसंखमेरीमृंप्रं° B  6b °भौर्णाग्रं B, °तोरणाढ्य: M  6d भजेच्च M, *TY* col. इति om, B इति महायात्रायां मङ्गलाध्याय एकविंश: M



ध्वजातपत्रायुधसन्निपातः क्षितौ प्रयाणे यदि मानवानाम् ।
उत्तिष्ठतो वाम्बरमेति सङ्गं पतेच्च वा तन्नृपतेः क्षयाय ॥ १ ॥

दद्रुप्रतिश्यामविचर्चिकाः स्युः कर्णाक्षिरोगा पिटकोद्भवो वा ।
प्रायो बले नेतरि वा नृपे वा जानीत राज्ञो भयकारणं तत् ॥ २ ॥

उत्तानशय्यासनवातसर्गनिष्ठ्यूतदुर्दर्शनकासितानि ।
नेष्टानि शब्दाश्च तथैव यातुरागच्छतिष्ठप्रविशस्थिराद्याः ॥ ३ ॥

कार्ये तु मूलशकुने ऽन्तरजे तदह्नि
विद्यात् फलं नियतमेवमिमे विचिन्त्याः ।
प्रारम्भयानसमये तु तथा प्रवेशे
ग्राह्यं क्षुतं न शुभदं क्वचिदप्युशन्ति ॥ ४ ॥

क्रोशादूर्ध्वं शकुनविरुतं निष्फलं प्राहुरेके
तत्रानिष्टे प्रथमशकुने मानयेत् पंच षड्वा ।
प्राणायामान्नृपतिरशुभे षोडशैवं द्वितीये
प्रत्यागच्छेत् स्वभवनमतो यद्यनिष्टस्तृतीयः ॥ ५ ॥

---

Testimonia

1 cited by Govinda on *MC* 11, 102-103. 1 and 3 cited by Viṣṇuśarman on *VM* 12, 20  4-5 = *YY* 18, 29-30

Apparatus

In M 1 Precedes 27, 1; 2 follows 29, 2; and 3-6 follow 26, 3 1a °पत्रायत° B, °पत्रादिक° M  1b प्रयातो B  1c चाम्बर° Viṣṇuśarman, वायुध° Govinda  1d पतेत्तथा M, पतेत वा Govinda पाताच्च पातं नृपते° Viṣṇuśarman °र्भयाय Govinda Viṣṇuśarman 3a °पातसर्ग° Viṣṇuśarman 3b °निष्ठतदुर्दशन° B, °निष्ठ्युतदर्शन° M °काश्यतानि B, °तासितानि M °वाशितानि Viṣṇuśarman  3c निष्टानि B निष्टेन्शिाश्च M  3d °रागश्च Viṣṇuśarman °वीराद्या: M  4a मूले कुशनेऽन्तर्ये B  4b दिव्यात् B  4c समयेषु BM  4d प्राम्यं M न तु शुभं त्विदप्युशन्ति M  5a क्रोशादर्द्धं शकुनवितं M  5c षेडिशीव B, षोडशाथो M  5d प्रत्यागच्छन् *YY*

चक्रे वराहमिहिरः शकुनोपदेशमुद्देशतो मुनिमतान्यवलोक्य सम्यक् ।
यद्ग्रन्थविस्तरभयादविजानतो वा नोक्तं तदन्यकथितादपि चिन्तनीयम्॥६॥

**इति बृहद्यात्रायां ध्वजातपत्रादिशकुननामाध्यायोऽष्टविंशः ॥**

---

स्निग्धा स्थिरा सुरभिगुल्मलता सुगन्धा
शस्ता प्रदक्षिणजला च निवासभूमिः ।
नेष्टा विपर्ययगुणा कचशर्करास्थि-
वल्मीककण्टकविभीतकसङ्कुला च ॥ १ ॥

गत्वालयं सुरगुरुद्विजसाधुमित्र-
तीर्थेतिहासजयपुण्यकथासु तिष्ठेत् ।
हत्वा पशुं रिपुगृहाकृतमुद्यमे च
प्रास्याथवान्नमयमस्य विधाय रूपम् ॥ २ ॥

एकत्राध्युषितस्यात्रिगौतमच्यवना जगुः ।
यात्रां त्रिपञ्चसप्ताहात् पुनर्भद्रेण योजयेत् ॥ ३ ॥

तच्चायुक्तमिति प्राहुर्होराशास्त्रविदो जनाः ।
वांछितार्थफलावाप्तौ यात्रा परिसमाप्यते ॥ ४ ॥

**(इति) बृहद्यात्रायां निवेशलक्षणाध्याय एकोनत्रिंशः ॥**

---

Testimonia

1. cited by Śivaraja on P. 209   3 cited by Govinda on *MO* 11, 95

Apparatus

6c °दभिजानतो M col. इति om. B
इति महायात्रायां शकुनाध्यायः त्रयोविंशतिः M

In M the order is: 31, 3; 29, 1-2; 28, 2; and 29, 3-4 1b प्रदक्षिणजभा B 1c कचशर्करास्थि° B 1d °कण्डक° B, °कीटक° Śivarāja 2c पशून् B °ग्रहा° BM 2d नात्या° M 3a °त्रा° om. M °ध्यु (in marg. षि B²) षित //// (in marg. स्या B²) त्रि B 3a-b °तस्य जगुर्यात्रामत्रात्रि° गौतमच्यवनाः Govinda 3c त्रि (in marg. पंच B²) सप्ताहा B, पंचत्रिसप्ताहात् M 3c-d पंचत्रिसप्तरात्राद्भूयाद्भद्रेण संयोज्यं Govinda 3d °द्रेण भूपतेः योजयेत् M 4b °होरा° B col. om. M



अक्षेपशीलः परुषाभिधायी विरक्तभृत्यः परदारगामी ।
लुब्धोऽसहायो व्यसनी कृतघ्नः स्थितिप्रभेत्ता करशीर्णराष्ट्रः १ ॥

विस्रम्भहा क्रोधवशो नृशंसः क्षुद्रः प्रमादी न बहुश्रुतश्च ।
दिव्यान्तरिक्षक्षितिजैर्विकारैर्निपीडितो यः स तु दैवहीनः ॥ २ ॥

अतो विपर्यस्तगुणेन राज्ञा तादृग्विधोऽरिस्त्वभियुक्तमात्रः ।
तरुर्घुनैर्जग्ध इवात्तवीर्यो महानपि क्षिप्रमुपैति भङ्गम् ॥ ३ ॥

**इति बृहद्यात्रायामभियोज्यलक्षणाध्यायस्त्रिंशः ॥**

---

विद्विष्टप्रवरनरप्रतापहीना निःशौचामृतवरवारणाश्च योधाः ।
सोत्पातप्रकृतिविपर्ययानुयाता शोकार्ता रिपुवशमाशु याति सेना ॥ १ ॥

संग्रामे वयममरद्विजप्रसादाज्ज्येष्यामो रिपुबलमाश्वसंशयेन ।
यस्यैवं भवति बले जनप्रवादः सोऽल्पोऽपि प्रचुरबलं रिपुं निहन्ति ॥२॥

---

Testimonia :

1-3=*TY* 9, 24-26 and cited by Śivarāja on P. 206
1-2=*TY* 9, 27-28

Apparatus :

In M 30, 1-3 repeated after the two extra verses that follow 32, 18; the repeat here called M² 1a पुरुषाविधायी B, परुषाभिभाषी Śivarāja 1b परापवादी Śivarāja 1c लब्धो B 2a विस्रब्धहा M² क्रोधवशो B, क्रोधपरो MM² Śivarāja 2d यश्च स MM² Śivarāja दैव हि M² 3 om. M 3a अदैवलक्ष्मान्यगुणेन Śivarāja 3b °स्त्वनुयुक्तमात्रः Śivarāja 3c तरुर्गजै M² °र्जग्ध om. in lac. M² इवात्तकार्यो *TY*, इवाल्पवीर्यो Śivarāja. after 3 Śivarāja adds :

यस्मिन् देशे पुरे गेहे त्रिविधोत्पातपूर्वकम् ।
दृश्यते तत्र भङ्गः स्यादित्युक्तं ब्रह्मयामले ॥

col. om. M. इति om. B इति महायात्रायां प्रास्थानिकं नाम द्वाविंशोऽध्यायः M²

1a तद्विष्ट° *TY* 1b निःशौर्या वरवारणाश्वयोधमुख्याः *TY* 1d रिपुबल° *TY* यातु B 2c °प्रवाहः M 2d सोऽन्यो B, स्वल्पो *TY* प्रवर° *TY* परं निहन्ति M, निहन्ति राजा *TY* 3 inserted before 29, 1 in M,

प्रोत्क्षिप्तक्षुपपांशुपत्रविहगच्छत्रध्वजाग्रान्तकृद्
दुर्गन्धिः करिदानशोषजनकः सावर्त्तलोष्टोत्करः ।
यात्तुर्वायुरनिष्टदः शुभकरो यात्रानुलोमोद्यमः
प्रह्लादी सुरभिप्रदक्षिणगतिः स्वादुश्च सिद्धिप्रदः ॥ ३ ॥

पृथुघनमनुलोमं स्निग्धमम्भोदवृन्दं तरुनगनगरेष्टद्रव्यसत्वानुकारि ।
जयदमुभयपार्श्वाधिष्ठितं पृष्ठतो वा न शुभकरमतोऽन्यद्यानकाले नृभर्तुः ॥४॥

निन्दितसत्त्वपिशाचविचित्राः पिशितमृगाकृतयः परुषाश्च ।
वज्रमुचः क्षतजाश्ममुचो वा बलभयमाशु जनाः कथयन्ति ॥ ५ ॥

भृशं क्षरन्तो रुधिरारुणा वा सशक्रचापा खररूक्षनादाः ।
रणोपयोज्याकृतिचित्ररूपा रणाय दृष्टा गगनेऽम्बुवाहाः ॥ ६ ॥

सप्ताहान्तर्बलभयकरी वृष्टिरन्यर्तुजाता
केचिद्यात्रामसितजलदैः प्रोत्थितां पूजयन्ति ।
चित्राभ्रायां बलपतिवधो रुक् च पीताम्बुदायां
क्षुच्चोष्णायां भवति न चिरादम्बुदायां विनाशः ॥ ७ ॥

वाहनानि सव्यगो हन्ति योषितोऽन्यथा ।
पंजराकृतिस्थितः सर्वतो बलेश्वरम् ॥ ८ ॥

चापमैन्द्रमनुलोममखण्डं प्रोज्ज्वलं बहुलमायतमिष्टम् ।
स्फूर्जनं सलिलकुम्भनिषेकं क्षोभितार्णवसमं विजयाय ॥ ९ ॥

**Testimonia**

6 and 7 cited by Govinda on *MC* 11, 98

**Apparatus**

3a प्रोत्क्षेपित° B °वासुविहगश्शक्र° M °ग्रान्तक° M 3b °जनन M 3c यात्रानुगोल्वोद्यमः B 3d पूर्वादिः M वृद्धिप्रदः M 4a °म्भोऽदृंदं B 4b °नगरन गेष्ट° B 4c जयकृदुभयपार्श्वे वेष्ठितं M 5a निंद्यति B 5b °भगाकृ° B 5d जनभय° M 6a शरंतो B वा om. M, °भाः Govinda 6d गमने B Govinda 7a दुष्टरण्यर्तु° B 7b प्रोद्यतां B, संयुतां Govinda 7c चित्राब्दायां M बलवति° M, बलमति° Govinda रुक्स° Govinda 7d शुक्राब्दायां न भवति Govinda च नाशः M, च नात्र Govinda 8d नलेश्वरं B 9c स्फूर्जितं M शरल° B 9d °समं om. B



तन्वी प्रलम्बा विजयाय दीर्घा तडिद्घनस्फूर्जथुवर्जिता च ।
शस्ताशनिश्चाप्यसमीपजातः प्रदक्षिणेनाप्यति पातशब्दः ॥ १० ॥

लभेऽर्केन्दू निघ्नती शस्ति पौरानुल्का हन्याद्यातुपौरान् ग्रहाश्च ।
यातुः शस्ता सम्भृता वा ध्रुवर्क्षे नेष्टातोऽन्या धूमिनी श्यावरक्ता ॥११॥

हन्यान्नृपपौरराष्ट्रिकान् भृत्याम्भोरुहतस्करान् द्विजांश्च ।
वेला क्रमशो दिनादितः काष्ठायां च स यत्र भूस्वनश्च ॥ १२ ॥

शस्ता शान्तद्विजमृगघुष्टा सन्ध्या स्निग्धा मृदुपवना च ।
पांशुध्वस्ता जनपदनाशं धत्ते रूक्षा रुधिरनिभा वा ॥ १३ ॥

**(इति) बृहद्यात्रायां सेनावातवृष्ट्युल्काभूगर्जितसन्ध्यालक्षणनामाध्याय एकत्रिंशः ॥**

---

परिवेषोऽर्कशशिनोः शलुपक्षग्रहैः सह ।
स्निग्धोऽखण्डश्च जयदः पापदो बहुमण्डलः ॥ १ ॥

प्रतिलोमोऽतिबहुलो नेष्ट इष्टः प्रदक्षिणः ।
नीहारः पांशुपातश्च हितः स्निग्धः प्रदक्षिणः ॥ २ ॥

गन्धर्वनगरं हन्ति प्राक्प्रभृत्यवनीश्वरम् ।
बलेशं युवराजं च पुरोहितमिति क्रमात् ॥ ३ ॥

सिताद्यं ब्राह्मणादींश्च विदिक्षु वर्णसङ्करान् ।
प्रदक्षिणं तु यात्रायां जयदं नेष्टमन्यथा ॥ ४ ॥

**Apparatus**

10a प्र° om. M विलय B 10b तदि° M °स्फूर्जतवर्यतानि च B 10d नाप्यति B पातिशब्दः B 11a निघ्नन्ति B शस्ति] हन्ति M 11b °पौरा B, °पौर° M °ग्रहाश्चेत् M 11c संवृता या M 11d श्यावरूक्षा M 12b °रद्वि-जान् B 12c याने M 12d काष्ठांतां M यत्र भूत्वनः B, यति भस्वना M 13a °मृघुष्टा M 13b सस्या मृदुपपा च M col. om. M

1b रात्रपक्ष° B 2a तु बहुलो M 2d हितौ स्निग्धौ प्रदक्षिणौ M 3c वनेशं B, बलेश्वरं M 4a ब्रह्मणादौश्च B 4b विदिगुत्थं च B, विदिक्षं वर्ण° M 4c च B

दिशां दाहोऽथ जयदः प्रदक्षिण उपागतः ।
श्वभ्रोन्नते वधो राज्ञो जयाय व्यत्ययेन च ॥ ५ ॥

घृताम्बुपयसां स्रावे च्युते वृक्षाच्च तत्क्षयः ।
तैले च नाशो मुख्यानां रक्ते शस्त्रकृतं भयम् ॥ ६ ॥

मद्येन तु मिथो भेदो रुग्भयं दधिनिस्रवे ।
कुसुमात् कुसुमोत्पत्तौ परचक्रागमं वदेत् ॥ ७ ॥

बहुतोयेऽतिसंशोषः कूपेऽसृक्पूर्तिविस्रवः ।
राज्ञोऽब्दार्धाद्वधं कुर्युः स्रोतोऽल्पत्वे परागमः ॥ ८ ॥

वृष्टिविद्युत्स्वनैर्व्यभ्रे चरस्थिरविपर्यये ।
दिनोल्कायां च पीड्यन्ते जना भूपतिभिः सह ॥ ९ ॥

सप्ताहं सन्ततान्यतो वृष्टिर्हन्यान्नराधिपम् ।
अनग्निज्वलने पुंसां व्याधिराश्वेव जायते ॥ १० ॥

पीडा राष्ट्रस्य षण्मासादुष्णशीतविपर्यये ।
मासेऽष्टमे नृपस्यान्तो निनादे पशुपक्षिणाम् ॥ ११ ॥

नगरारण्यसत्त्वानामरण्यपुरसेवने ।
राष्ट्रपीडाधिके वर्षे मुख्यलोकस्य च क्षयः ॥ १२ ॥

स्तम्भोपलकुसूलार्चापीठशय्यापसर्पणे ।
गदने चापि देशस्य नाशं मासत्रयाद्वदेत् ॥ १३ ॥

Testimonia

10a-b cited by Govinda on *MO* 11, 98

Apparatus

5a विजयदः M 5b °णमुपागतः M 5c स्वभ्रोत्क्षते B 5d छायाया व्यये तथा B 6a-b स्रावश्च्युते M 6c तैलेन M 6d भवं M 7b दधिवस्रवे M 8b स्रक्पूतिविस्रवः M 8d तोयोऽन्यत्वे M 9c दिनोल्वीया B, दिनोत्कायां M निपीड्यन्ते M 10a सप्ताहात् M सततान्यतौ Govinda 10b वृष्टिहीना B 10d व्याधिताश्वैव M 11d निगदे मृगपक्षिणां M 12b °मारण्यमुरसेवया M 12d किमु लोकस्य M 13a °परशुक्रार्चा° B 13b °पीठी° M °शैर्या° B °प्रसर्पणे M 13c नदने वा विदेशस्य M 13d मासद्वया° M



गोनागाश्ववधोऽब्दार्धे व्यत्ययो वा नृपान्तकृत् ।
देशनाशस्तथा स्त्रीणां खगाहिपशुसम्भवे ॥ १४ ॥

धान्यरसमद्यभोजनफलपुष्पस्नेहमांसवस्त्राणाम् ।
सिकतारजोरसात्मकसशर्कराङ्गारवर्षेषु ॥ १५ ॥

सुतपत्नी क्षुद्राज्ञा नृपदेशचमूपमरणसंक्लेशाः ।
भेदोऽपदोऽथमन्त्रिव्याधिविनाशभूपक्रोधाः ॥ १६ ॥

निशि सुरचापं सितवर्णाद्यं जनयति पीडां द्विजपूर्वाणाम् ।
भवति च यस्यां दिशि तद्दिश्यं नरपतिमुख्यं न चिराद्धन्यात् ॥ १७ ॥

मृगपशुरासभवाजिगजानां वियतरवो न चिराद्भयदाता ।
विबुधपतिध्वजतोरणपातः फलमिदमेव करोति नृपाणाम् ॥ १८ ॥

(इति) बृहद्यात्रायामुत्पाताध्यायो द्वात्रिंशः ॥

---

शुद्धैर्द्वादशकेन्द्रनैधनगतैः पापैस्त्रिषष्ठायगै-
र्लग्ने केन्द्रगतेऽथवा सुरगुरौ दैतेयपूज्येऽथवा ।
सर्वारम्भफलप्रसिद्धिरुदये राशौ च कर्तुः शुभे
स्वग्राम्यस्थिरभोदये सुभवनं कार्यं प्रवेशेऽपि वा ॥ १ ॥

Apparatus

14a ऽब्दार्धाद् M 14c °नाशो भवेत् M 15c शिक्ता° B °ताङ्गैवसास्रक्° M 15d °सशुक्राङ्गारवर्षेण B 16a °द्राज्ञा om M 16b °संक्लेशैः M 16c °पदोषमन्त्र° M 16d °व्यधिभयविनाशभूययोगः B °भय° M 17b नृपपूर्वाणाम् M 17c तद्देश्यं M 18b व्ययतरधो B, वियतिरवो M after 18 M adds:

अरुन्धतीं देवपथि ध्रुवं च छायां शशाङ्कस्य च नेक्षते यतः ।
अन्यैरदृश्यं यदि वापि पश्येत् वर्षान्तरे मृत्युवशं स याति ॥
छायां शिरस्कांकवधूमनाशः खण्डं पदं देहजघोषहानिः ।
आहारशीलाकृतिवैकृतश्च प्राप्तं कृतान्तं कथयन्ति जन्तोः ॥

See also Utpala on *BY* 15. col. om. M

1n M 33 follows 28, 6 1a °नैधनग्रहैः M 1d स्वग्राम्य° M शुभवशे M

क्रूरोदये तदहनि व्यतिपातयोगे रिक्ते तिथावृतुसमाप्तिषु वैधृते वा ।
तीक्ष्णोग्रभेषु च हुताशविषाभिघातरौद्राणि सिद्धिमुपयान्त्यसिते च पक्षे ॥२॥

केतूल्कार्कजराहुकीलककुजा बिम्बप्रविष्टा यतः
सूर्येन्द्वोः परिवेषखण्डमथवा दृश्येत यस्यां दिशि ।
क्रोष्टुश्वाहिपिपीलिकाशशमृगध्वांक्षादयो वा पुरे
सैन्ये वापि यतो विशन्ति हि ततः शत्रोः पुरं घातयेत् ॥ ३ ॥

पातालर्क्षे राहुकेत्वोः पुरेऽरेस्तोयोच्छित्तिः सालपातश्च कार्यः ।
जामित्रस्थे भूमिजेऽस्यांशके वा पुत्रेणेन्दोर्वीक्षितेऽग्निः प्रदेयः ॥ ४ ॥

**(इति) बृहद्यात्रायां पुरदुर्गालम्भो नामाध्यायस्त्रयस्त्रिंशः ॥**

---

दिग्दाहक्षतजरजोश्मवृष्टिपातैर्निर्घातक्षितिचलनादिवैकृतैश्च ।
युद्धान्ते मृगशकुनैश्च दीप्तनादैर्नो भद्रं भवति जयेऽपि पार्थिवस्य ॥ १ ॥

शुभा मृगपतत्रिणो मृदुसमीरणो ह्लादकृत्
ग्रहाः स्फुटमरीचयो विगतरेणुदिङ्मण्डलम् ।
यदान्यदपि वैकृतं न विजयावसाने भवेत्
तदा सुखमकण्टकं नृपतिरत्ति देशं रिपोः ॥ २ ॥

---

**Testimonia**

3-4 = *TY* 9, 31-32   1-2 = *YY* 20, 7-8 and *TY* 9, 34-55

**Apparatus**

2b च M   2c तीक्ष्णग्रहेषु M °विषादिघाते M   4a पातालेऽर्के M पुरेशे M 4b °च्छीतिः B, °च्छक्तिस् M after 4 M adds:

पुरा(रं)रिपोर्भूमिपते नि(र्ति)रुद्ध्यात् श(च्छ)त्रोरनिष्टग्रहदिङ्निविष्टः ।
युद्धस्य यात्रासम एव कालः क्रूरेषु लग्नेष्वथ कूटयुद्धम् ॥
अन्तर्मुखाः पौरभयं विहङ्गाः प्राकारसंस्था विनिवेदयन्ति ।
आगन्तृनाशं च बहिर्मुखास्ते तुल्या विहङ्गैस्समा कुजाश्च ॥

(तुल्यं विहङ्गैः सरमात्मजाश्च). These verses are *TY* 9, 29-30. col. om. M

In M the order is 4; 1c-d; 1a-b; and 2 1a निर्घातक्षतजरजो° M 1c युद्धान्ते B   1d जिते *TY*   2c यद्यन्य° B, यदन्य° *TY*, *YY*



उद्वाहमकालोत्सवमभिषेकं चात्मजस्य यः कृत्वा ।
प्रस्थानाविहतः सोऽभ्येति ततश्चोत्सवदिनेषु ॥ ३ ॥

परविषयपुराप्तौ साधुदेवद्विजस्वं
कुलजनवनिताश्च क्ष्माधिपो नोपरुन्ध्यात् ।
विगजतुरगशस्त्रान्नार्तिभीतांश्च हन्या-
च्छुभतिथिदिवसर्क्षे हृष्टसैन्यो वशेच्च ॥ ४ ॥

स्वविषयमुपगम्य मानवेन्द्रोऽवलिमुपयाचितकानि चाधिकानि ।
निगदितविधिनैव संप्रदद्यात् प्रथमगणासुरभूतदैवतेभ्यः ॥ ५ ॥

इति मनुजपतिर्यथोपदेशं भगणविदां प्रकरोति यो वचांसि ।
स सकलनृपमण्डलाधिपत्यं व्रजति दिवीव पुरन्दरो चिरेण ॥ ६ ॥

**इति श्रीवराहमिहिरविरचितायां यक्षेश्वरमेधीययात्रायां जयोत्तरलक्षणपरिभाषाध्यायश्चतुस्त्रिंशः ॥**

**समाप्तोऽयं ग्रन्थः ॥**

—: * :—

Appendix A: the verses preceding 2, 15 in Viṣṇuśarman.

यदि जन्म(विलग्न) राशि(केशौ) हिबुकेऽस्तगृहे ऽरिपापदृष्टौ ।
विबलावधिकौ तयोर्यदा तौ प्रतियानमसंशयं मृ यायात ॥ १ ॥

तयोरष्टमे षष्ठमे वा विलग्ने तदष्टारिभेशौ यदा वा तनुस्थौ ।
यदा तत्पती दुर्बलौ तौ तथा हि प्रयाणं विषग्रासतुल्यं करोति ॥ २ ॥

---

**Testimonia**

4 = *YY* 20, 9 and *TY* 9, 33   5=*YY* 20, 25   6=*YY* 20, 10

**Apparatus**

3 om. M   3c प्रस्थाताविहताशो B   3d तातश्चो° B   4b °वनितानां M, °वन्ताश्च B   4c विगतगजतुरङ्गान् पीडितान्नोपहन्या - M, जनपदहितयुक्तः पूजयेत् पौरमुख्यान् *YY* °न्नार्त° *TY*   4d स्थिरतिथिकरणर्क्षे *YY* वशेत्तु M, *TY* 5c संनिदध्यात् *YY* col. इति महायात्रायां चतुर्विंशोऽध्यायः M after the colophon M adds appendix B

1b हिबुके वास्तगृहे ed.   1d यदि यायादसंशयं ed.

करोति राशिर्गमनं शुभं च परो विलग्ने शुभदृष्टियुक्तः ।
स्थिरोदये स्याद्गमनं न जातु शुभं शुभैर्दृष्टियुतेऽत्र वाच्यम् ॥ ३ ॥
द्विमूर्तिराशावुदयं प्रपन्ने क्रूरग्रहैर्युक्तनिरीक्षिते च ।
प्रयाति यद्यप्यबुधस्तादानीं निवर्तते शत्रुजनाभिभूतः ॥ ४ ॥
केन्द्रत्रिकोणेषु शुभस्थितेषु पापेषु केन्द्राष्टमवर्जितेषु ।
सर्वार्थसिद्धिं प्रवदेन्नराणां विपर्ययत्वे तु विपर्ययः स्यात् ॥ ५ ॥

---

Appendix B: the verses following chap er 34 in M.

एष्यो घनं क्षपयति व्यतिपातयोगो
    मृत्युं ददाति नियतं खलु वर्तमानः ।
सन्तापशोकवधदैन्यभयान्यतीत-
    स्तस्माद्दिनत्रयमिति प्रजिहीत विद्वान् ॥ १ ॥ (=११)
अतीतमेष्यं तदहश्च केचिद्दिनत्रयं दूषयतीति शास्त्रम् ।
न संहितायामरिक्तान्त्रिकाणामेवं प्रकारो व्यतिपातयोगः ॥ २ ॥
चन्द्रार्कबिम्बान्तरमेकमार्गाद्यावत् परिक्रामति योऽस्य कालः ।
यातो यदा स्यादथवा भविष्यन् तावत् फलं तस्य कुतोऽस्त्यभावात् ॥ ३ ॥
नक्षत्रदोषात् सकलस्य राशेर्न दूषणं भस्य न राशिना च ।
ऋक्षेऽपि चन्द्रार्ककृतः स योगस्तन्मात्रमेवेति मतं बहूनाम् ॥ ४ ॥
राशिद्वयैक्ये गमने च दोषो धिष्ण्यस्य नास्त्यन्यगृहाश्रयत्वात् ।
एकाल(य)स्थस्य न राशिदोषः स्याद्दूष्यतेऽतीव भवेत् प्रसङ्गात् ॥ ५ ॥
मेषस्य दोषाद्बहुलापि दृष्टा वृषोऽपि दृष्टो बहुलाश्रयेण ।
तेनापि सौम्यं मिथुनं च तेन पुनर्वसुस्तेन च कर्कटश्च ॥ ६ ॥
नक्षत्रदोषात् खलु राशिदोषो भं राशिदोषेण च दूष्यमेति ।
यद्येवमन्योन्यसमाश्रयत्वाद्भानां नवानामपि दोषसङ्गः ॥ ७ ॥

---

Apparatus

2c न संहिताद्दभरिक्तांत्रि° M   3c यातोभया M   6b दृष्टे M



पिष्टेन दोषेण च भस्य दोषो बौधेन कौजस्य यथा न चाह्नः ।
एवं तथा न व्यतिपातदोषः कालं हिनस्तीति गतं भविष्यन् ॥ ८ ॥
विषप्रदिग्धेन हतस्य पत्रिणां मृगस्य मांसं सुशुभं क्षताद्दते ।
यथा तथैव व्यतिपातदूषितः क्षणोऽत्र दूष्यो न च भं न वासरः ॥९ ॥
तस्मै प्रणम्य शिरसा व्यतीपाताकुलीकृतैर्यजनैः ।
युक्तायुक्तविचारैर्वराहमिहिरश्चकार मतिम् ॥ १० ॥
एष्यो घनं क्षपयति व्यतिपातयोगो
    मृत्युं ददाति नियतं खलु वर्तमानः ।
सन्तापशोकवधदैन्यभयान्यतीत-
    स्तस्माद्दिनत्रयमिदं परिवर्जनीयम् ॥ ११ ॥ (=१)
भवनद्वयैकांशकं चन्द्रार्कभे तिष्ठतः समाक्रम्य ।
सिंहकुलीरे च तथा स्फुटगणिते स व्यतीपातः ॥ १२ ॥
अयमेवार्कोऽभिहितः शशिभानोरेकनाथभद्विगयोः ।
षड्विंशे षड्विंशे व्यतीपातः पतति नक्षत्रे ॥ १३ ॥
रविचन्द्रौ (यदि) तदहनि परस्परं प्रकुपितौ निरीक्षेते ।
क्रोधनयनानलभवो दृक् संपातान्तयोर्भवति ॥ १४ ॥
रौद्रो दीर्घः............कृष्णः शुक्लः संभवत्येव ।
सर्वारम्भेष्वशुभो व्यतीपातः कीर्तितः कैश्चित् ॥ १५ ॥
परस्परं रविशशिनोर्निरीक्षतोर्यदा तदा तदा गुरुबुधभेषु केवलम् ।
अथैकदिग् भवति(च)नित्यमेव वा निरन्तरं भवन उपास्य शास्त्रतः ॥१६॥
चन्द्रेऽजपर्यन्तविलिप्तिकास्थे भानुर्यदा वृश्चिकमभ्युपैति ।
तावत्तदेकेन मतेन कोऽस्य नक्षत्रवद्राशिसमुद्भवो वा ॥ १७ ॥
षडशीतिमुखान्ययने विषुवद्द्वयमथ च शर्वरीमानम् ।
केवलसूर्यान्येतान्यनुवेक्ष्य विभावरीनाथम् ॥ १८ ॥

---

Apparatas

10b °कृता यजनैः° M   12a द्वयकैशकं M
15b कृष्णश्शाकु° M

नक्षत्रान्मृदुस्थिरादुभयतीक्ष्णातीक्ष्णं लघुषु कायेषु ।
पंसवनविवाहक्षौरयात्रादिकाश्च शशिगत्या ॥ १९ ॥

तिथिकरणव्यतिपाता गण्डान्तो वैधृतस्त्र्यह:स्पृक् च ।
चन्द्रार्कगतिवियोगाद्वा घातव्यानि सूर्यशशिगत्या ॥ २० ॥

रविशशिगतिलक्षणो ऽप्यकालो न पृथगयं शशिनो यतः किमर्थम् ।
शशिगृहपतिसंस्थितः प्रमाणं दिनकरचारवशाद् भवेत् कश्चित् ॥ २१ ॥

कियत् प्रमाणश्च समानकालो यतो (ततो) नागतयातचिन्ता ।
यदास्य कालः पति+अव्य+एकः सः श्रूयतेऽन्यः पतितस्य चापि ॥२२॥

उपलक्षणमात्रमिदं कथितं न तु लक्षणमेव भराशिकृतम् ।
रविचन्द्रकलापरिणामकृतो दिनकृद् ग्रहवत् समयोऽस्य+मतु+ ॥ २३ ॥

प्रारम्भकालादसमाप्तिकालो यावद्ग्रहस्येव स वर्तमानः ।
तस्योपलब्धिर्गणितेन तत्त्वं प्रोक्तं च सर्वं करणे मयातः ॥ २४ ॥

केचिदशिक्तितत्वाद्विक्षेपवशादपक्रमं शशिनः ।
कृत्वात्रायनभागैस्तुल्यं व्यतिपातमिच्छन्ति ॥ २५ ॥

लल्लाचार्यमतं किल मार्गैकत्वं यदार्कचन्द्रमसोः ।
भवति तदा•व्यतिपातो वाक्यमिदं तस्य चार्ये द्वे ॥ २६ ॥

चन्द्रोऽर्कोनं भगणार्धमुद्धरेद्रविशशिद्विभुक्तिभ्याम् ।
मार्गैकत्वं न भवति विक्षेपापक्रमांशमार्गेण ॥ २७ ॥ (=29, a-b)

गगने निशा चरार्कभयुगपत् स्यातां यदैकमार्गस्थौ ।
भगणादधिकश्च यदा शशी च स भवेद् व्यतीपातः ॥ २८ ॥

मार्गैकत्वं न भवति हि विक्षेपापक्रमांशमार्गेण । (=27, c-d)
कथयति तस्माद्ग्रहणं भानौ मार्गैकमे हेतुः ॥ २९ ॥

मार्गैकगं किलेन्दुं नियमात् संचराद्यतोऽन्यथा मेघः ।
तद्विक्षिप्ते ऽवहिते नेह भवत्यक्षवैषम्यात् ॥ ३० ॥

एकस्मिन्नपि देशे मार्गैकत्वं न भवति सर्वत्र ।
व्यतीपातं चेदेव न कदाचित् सः सव्यतीपातः ॥ ३१ ॥



Appendix C : the Calcutta Fragment of Utpala's *Yakṣeśamedhiyayātrāvivṛti.*

(स्वर्क्षेशदशाधिपयोर्मित्रोदासीनशत्रुभांशभवाः ।
तत्पाकभुजश्चोक्ता विजिगीषोर्मित्रमध्यरिपवः ॥ [12,3])

F. 124...1 ते ते ऽपि सर्व एव विजिगीषोर्मित्रमध्यपरा उक्ताः कथिताः । एतदुक्तं भवति । स्वर्क्षेशदशाधि(पयोर्मि)त्रग्रहदशा वर्तते येषां ते विजिगीषोर्मित्राणि । उदासीनदशा येषां ते मध्यस्थाः । शत्रुद(शा येषां ते) पराः । चकारः समुच्चयमेवार्थम् । देवादर्शे ? ग्रहा स्वक्षेत्राधिप(ा) रिपुभवनभागजात...........चैवम् । रिपवः प्राक्यत (?) सहजास्तत्पाकभुजश्च भृतकाख्याः । त्रिविधो ऽप्येवं त्रिविधा व्याख्या..........

योनयश्च मित्रगुणाः स उदासीन इति स्यात्तदपि दशो मध्यमः प्रोक्तः ।
एवं मित्रोदासीनश (त्रु)-भांशभवाः संग्रहणीयाः । तथा च कौशिकश्चाह ।
एभिरुपायैर्बलिभिर्मित्रोदासीनश(त्रुभां)शभवाः ।
स्वपुरबलसंनिविष्टाः स्वीकर्तव्या नरेन्देण ॥

अधुना ग्रहषाड्गुण्यं के मे षड्गुणा उ(क्ताः ॥
सन्धिं च विग्रहं चैव यानमासनमेव वा ।
द्वैधीभावं संश्रयं च षड्गुणान् संश्रयेत् सदा ॥
तत्र च योज(नमा)ह ॥

रिक्तानिष्टदशोऽरिर्नियमाद्विजिगीषुणा समुच्छेद्यः ।
अविरोहिदशः पी(ड्यःक)र्षयितव्य(स्त)थारोही ॥ [12, 4]

विजिगीषुणा शत्रोर्जन्मकाले न्वेष्यः । तत्र च योऽरिः शत्रु रिक्तानिष्टदशः । रिक्त(ा) । अनिष्टा वा दशा यस्य रिक्तदशोऽनिष्टदशश्च । तासां लक्षणं जातक उक्तम् ।

बलवर्जितस्य रिक्ता तथा नीचांशगतस्य ।
शत्रुभागे ज्ञेया नेष्टफलेति ।

एवंविधो यः शत्रुः स नियमान्निश्चयाद्विजिगीषुणा जेतुमिच्छता समुच्छेद्यः । स्वस्थानाच्चालनं शत्रोः समुच्छेद उदाहृतः । अवरोहितदशः

Apparatus
20 पी......र्षयि° C

पीड्य इति। (इ)ष्टस्य तुङ्गादवरोहिसंज्ञा। इत्यवरोहिणी दशा यस्य शत्रो: स पीड्य: पीडनीय इति। राष्ट्र(वा)सस्य विनाशस्तस्य कर्तव्य इत्यर्थ:। कर्षयितव्यस्तथारोही। रिपुपरिच्युतस्येति। आरोहि(णी)दशा यस्य शत्रो: स: कर्षयित(व्य): कृशभावमापादनीय:। हस्त्यश्वोष्ट्रसुवर्णादिना भूम्येकदे(श:)कर्षणीय:। पीडनकर्षणलक्षणम्।

राष्ट्रे दाहविलोपै: फलकाले यत्र पीडनं प्राहु:।
भूम्येक(दे)शहानि: कर्षणमर्थेन गुरुणा वा ॥

तथा च कामन्दकि:।

रेचनं कोशदण्डाभ्यां महामा........स्तथा।
एतत्कर्षणमित्याहुराचार्या: पीडनेरणमिति ॥

अधुना सन्धिलक्षणमाह ॥

(न स) द्दशदशोऽभियोज्य: संधानं तेन भूपतेर्न्यायम्।
end F.124 अशुभैष्यासन्नदश: शुभैष्य (पाकेन संदध्यात् ॥ [12,5])

(सकलफलददशाढ्यके प्रवरा मध्याष्टवर्गसंशुद्धौ।
न्यूनफला तात्कालिकविलग्नतिथिदिवसकरणाद्यै: ॥ [12, 16])

F.131 ...........फलदा भवति। तात्कालिकेन शोभनेनानुकूलेन लग्नेन विलग्नेन तिथिना शुभेन करणेन ववादिना शुभेन दिवसेन शुभग्रहवासरेणादिग्रहणान् महूर्तनक्षत्रांशकेषु या यात्रा परिगृह्यते सा न्यूनफलाधमफलेत्यर्थ: ॥

अन्यानपि प्रकारानाह ॥

उत्तमफलदा यात्रा त्रिकोणतुङ्गोपगेषु सौम्येषु।
मध्या स्वमित्रभवनोपगेषु नीचारिभेष्वधमा ॥ [12, 17]

सौम्येषु शुभग्रहेषु बुधगुरुशुक्रेषु तत्कालं त्रिकोणतुङ्गोपगेषु त्रिकोणे मूलत्रिकोणे तुङ्गे वा स्वोच्चराशावुपगतेषु या यात्रा परिगृह्यते सोत्तमफलदा प्रधाना। मध्या स्वमित्रभवनोपगेषु। तेष्वेव सौम्येषु स्वभवने स्वराशावुपगतेषु प्राप्तेषु मित्रराशावुपगतेषु वा या यात्रा

Apparatus

17. वावादिना C



परिगृह्यते सा मध्या मध्यफला। नीचारिभेष्वधमा। तेष्वेव सौम्येषु नीचारिभेषु नीचराशिषु अरिभेषु शत्रुराशिषु वा स्थितेषु सत्सु या यात्रा परिगृह्यते साधमानिष्टफलेत्यर्थ: ॥

अत्र च षट्प्रकारां यात्रामाह ॥

मध्याधमाधमोत्तमसममध्याधोधरोत्तमोत्कृष्टा।
मध्योत्तमा च षोढा या(त्रा) यात्राविदामिष्टा ॥ [12, 18]

F.131 सत्फलदशाविपाक इत्यादिना ग्रन्थेन ये त्रयो यात्राभेदा उक्तास्तान् यथाक्रमं स्थापयित्वा। ततोऽनन्तरोक्ता उत्तरसत्फलदा यात्रा इति ये त्रयो भेदा उक्तास्ते तदध: क्रमेण स्थापनीया:। ततो मध्याधमा इति। अष्टकवर्गपरिशुद्धेषु ग्रहेषु नीचारिक्षेत्रगेषु या यात्रा गृह्यते सा मध्याधमा। अधमोत्तमा इति। नीचारिक्षेत्रगेषु ग्रहेष्वधमा सत्फलदशाविपाके चोत्तमा। एवंविधा या यात्रा गृह्यते साधमोत्तमा। सममध्या। अष्टकवर्गपरिशुद्धेषु स्वक्षेत्रमित्रक्षेत्राश्रितेषु च या यात्रा गृह्यते सा मध्यमध्या। अधोधरा इति। तात्कालिकलग्नादिपरिशुद्धेषु नीचारिक्षेत्रगेषु च ग्रहेषु च या यात्रा सा अधोधरा। अधमाधमा इत्यर्थ:। उत्तमोत्कृष्टा इति। सत्फलदशाविपाके वर्तमाने स्वोच्चत्रिकोणोपगेषु चाशुभग्रहेषु या यात्रा गृह्यते सोत्तमोत्कृष्टा। उत्तमोत्तमेत्यर्थ:। मध्यमोत्तमा च। अष्टवर्गपरिशुद्धेषु ग्रहेषु स्वत्रिकोणोच्चगेषु च सर्वग्रहेषु या यात्रा गृह्यते सा मध्यमोत्तमा। एवं षोढा षट्प्रकारा यात्रा यात्राविदां यात्राज्ञानामिष्टाभिमता। नन्वत्र यात्राजसिंहतुरगोपग इव वरिष्ठ [12, 15a] इत्यादिना ग्रन्थेन ये यात्राविद्भिस्त्रय उक्तास्तै: सह बहवो भेदा भवन्ति।

end F.131.

(व्रणपिटकतिलकलांछनमशकादयस्त्वेव निर्दिष्टा: स्यु:।
कण्डूयनं नरपतेर्दक्षिणपाणौ जयायैति ॥ [13, 10])

F.145. ....यथा देहस्पन्दने फलं तथैषामपि। आचार्येण गर्गादीनां मतमुक्तम्। गर्गपराशराद्यै: पुरुषस्य दक्षिणाङ्गस्फुरणे यत् फलमुक्तं तत् स्त्रीणां वामाङ्गे।

तथा च वृद्धगर्ग आह।

Apparatus 14 °परिशुद्धो C 21 यात्राविद: त्रय C

दक्षिणाङ्गाश्रिता: पुंसां स्त्रीणां वामाङ्गमाश्रिता: ।
विपरीता न शस्यन्ते नास्ति तेषु फलानि वा ॥

तथा च पराशर: ।

उत्पातगण्डपिटका दक्षिणतो वामतस्त्वतीच्छात: ।
अन्या भवन्ति पुंसां तद्विपरीताश्च राशीनाम् ॥

कस्मादाचार्येण स्त्रीणामङ्गस्फुरणं न कृतमित्यत्रोच्यते । आचार्येणात्र यात्रोपयोगिकमात्रमुक्तम् । तथा चात्र शाकुने पठितम् ।

ग्रामारण्यप्रचाराद्यं लोकादेवोपलक्षयेत् ।
संविक्षिप्सुरहं वच्मि यात्रामात्रप्रयोजनम् ॥ [23, 6]

तथा च

माभूत् प्रसङ्गादतिविस्तरोरगजान्वपुंलक्षणदर्शनेषु ।
निमित्तमात्रं कथयाम्यतोऽहं प्रयाणकालोपयिकं नृपाणामिति ॥ [21, 1]

नारी विजिगीषुगुणेनाधिक्रियते । तस्मादयं तदेष इति ।

कण्डूयनं नरपतेरिति । नरपते राज्ञो दक्षिणपाणौ सव्यहस्ते कण्डूयनं जयायैति शत्रुविजयार्थमागच्छेदित्येतदुक्तं भवति ॥

यात्राकाले नृपस्य दक्षिणहस्ते कण्डू । यनं जयाय भवति ॥

F.145. भट्टोत्पलविरचितायां यक्षेशमेधीययात्राविवृतौ देहस्पन्दनाध्यायश्चतुर्दश: ॥

अथातोऽरिष्टलक्षणं व्याख्यायते । तत्रादावेव वर्षान्तरे ऽरिष्टपरिज्ञानमाह ॥

अरुन्धतीं देवपथं ध्रुवं वा छायां शशाङ्कस्य न वेक्षते य: ।
अन्यैरदृश्यान् यदि वीक्ष्यते वा वर्षान्तरे कालवशं स याति ॥

[after 32, 18. in M]

अरुन्धती वसिष्टभार्या । तां गगने तन्निकटे स्थितां य: पुरुष: न वेक्षते न पश्यति स तु वर्षान्तरे वर्षमध्ये कालस्य मृत्योर्वशं याति गच्छति म्रियत इत्यर्थ: । देवपथं मागवेषीगङ्गाप्रवाह इति लोके प्रसिद्ध: । ध्रुवो ध्रुवतारक: प्रसिद्ध उत्तरस्यां दिशि दृश्यते । सूक्ष्मात् सूक्ष्मतरं परात् परतरं यत् पंचमं तद्ध्रुवम् । ध्रुवमत्स्यमध्यवर्तिनं तारकमित्यर्थ: । छायां शशाङ्कस्येति । शशाङ्कस्य चन्द्रस्य छायां चन्द्रमण्डले मलं शश इति

Apparatus

17 भट्टो° C यक्षेश्व° C 19 देहपथं C



प्रसिद्धम् । तां शशाङ्कस्य संवर्धिनीं छायाम् । एतेषामुक्तानां पदार्थानामेकतमं य: पुरुषो न पश्यति स वर्षमध्ये म्रियत इति । अदृश्यान् यदि वीक्ष्यते वेति । अन्यैश्च पुरुषैर्यानि यस्तु ऋक्षाणि न दृश्यन्ते तानि

F.146. यदि । वीक्ष्यते पश्यति तदा स पुरुषो वर्षान्तरे कालवशं यातीति ।

अथान्यानप्याह

छायाशिरस्काकचधूमनाश: खण्डं पदं देहजघोषहानि: ।
शरिरशीलाकृतिवैकृतानि प्राप्तं कृतान्तं कथयन्ति जन्तो: ॥

[after 32. 18 in M]

छाया आत्मीया देहच्छाया । शिरस्का शिरोरहिता या । पतितस्य जन्तो: पुरुषस्य कृतान्तं मृत्युं प्राप्तं निकटवर्तिनं कथयन्ति मुनय: । अन्य एव वदन्ति यथा निर्मले गगने रविं पृष्ठत: कृत्वा स्वदेहच्छायां भूमौ क्षणमात्रं दृष्ट्वा गगने पुन: पश्येत् तत्र च यद्यपि शिरस्का दृश्यते तदा सा छायाशिरस्का । कचधूमनाश: । आतपस्थस्य पुरुषस्य कचेभ्य: केशेभ्यो मूर्धनि यद्धूमं निर्गच्छमानं दृश्यते दह(नो) वा पृच्छायां तस्य नाश: अदर्शनम् । खण्डं पदं प्रक्रमतो ऽस्थूलपृष्ठे खण्डं पदं पादमुद्रा खण्डिता भवति । तथा देहजघोषहानि: । देहजो यो घोष: शब्द: कर्णौष्ठगिलाङ्गुलिभ्यां घोष: शब्दो यत्नोपलभ्यते तस्य हानिरनुपलम्भनम् । तथा शरीरस्य देहस्य यच्छीलं स्वभाव: । आकृतिराकार: । एतयोर्वै-

F.146. कृतानि विकारा । अन्य ऋपत्व (?) मेतेषामुक्तानामेकतमं यस्य दृश्यते तस्य जन्तो: प्राप्तं कृतान्तं मुनय: कथयन्ति प्रवदन्ति ॥

तथा च भगवान् पराशर: ।

प्रकृतेर्विकृतेर्नृणां बुद्धीन्द्रियशरीरजा ।
अकस्माद्दृश्यते येषां तेषां मरणमादिशेत् ॥
एतत्समासं कथितं विस्तरोऽयमत: परम् ।
सूक्ष्मारिष्टावबोधार्थं स्पष्टं पुष्टार्थमेव च ॥

Apparatus

1 संवधिनीं C 3 नेति C
16 °ह्नान: C

तत्र व्यभ्रे नभसि रवीन्दुज्वलनप्रभासु स्वच्छायारुन्धतीध्रुवान्यतारकाणां दृश्याणामदर्शनं मरणाय मासे द्वादशे। वह्निसूर्येन्दुप्रभावानामदर्शनमेकादशे। सुवर्णरजतमुत्रपुरीषाणां वा स्वप्ने प्रच्छेदनं दशमे। यक्षरक्षःप्रेतपिशाचानामस्वप्ने दर्शनमतीन्द्रियाणामृते योगान्नवमे। बहुसंपन्नभुजो वाकस्माद् बलापचयो न श्रुतो वातिवृद्धिरष्टमे। सिकतायां सुकर्दमेषु विकृतासमकलपदाङ्कदर्शनं वा सप्तमे। काकश्येनगृध्रादीनां क्रव्यभुजां पक्षिणामकस्माच्छिरस्यभिलपनं (?) (षष्ठे)। गोमेषतुल्यपूर्णरजसाङ्गेभ्य F.147. उत्तमाङ्गाद्वा प्रवर्तनं देहच्छायाविकृतदर्शनं वा पंचमे। विद्युतां दर्शनममोघ (?) चतुर्थे। श क्रन्मेद्रवनुषां दर्शनमुहंदक (?) तृतीये। एकनयनव्याड्रादिनां वोषमाहाम्लवशं (?) वा द्वितीये। वद्गाढीकृतनासाभिन्नदर्शनं (?) सामान्ते सामान्यय(?)शोणितकुणपविट्मूत्रमनोज्ञगन्धप्रवर्तनमहेतुकं गात्रे स्याद् द्वादशाहात्। परचक्षुषि स्वशरीरादर्शनं निवातधूपगन्धस्याघ्राणं सप्ताहात्। सद्यः स्नातानुलिप्तस्य हर्षाणि पादाशुशोषणं जलार्द्रा शिरसि धूमाभिदर्शनं सूर्यसंतप्तमस्तकस्यादर्शनमूष्माणो वा त्र्यहात्। कृष्णपरुषवर्णप्रादुर्भावो गात्रे मुखे च पद्मप्रभासादृश्यं गण्डयोश्च रक्ततिल्कानामुत्पत्तिरहोरात्रात्। निर्मलेभस्यादर्शे वात्मदेहादर्शनं शिरसः श्रोत्रद्वयोरङ्गुलिः श्रवणद्वयोरन्तर्नादाश्रवणं सद्यो मरणायापि च ॥

सर्वदृष्टिरस(ग्रह)घ्राणशब्दा विपर्यया।
लक्ष्यन्ते हि मुमूर्षूणां स्वस्था स्वस्थशरीरिणाम् ॥
श्लथं खरं घनं श्लक्ष्णं शीतोष्णस्य विपर्ययः।
अकस्माद्वेत्ति यो देही दुर्लभं तस्य जीवितम् ॥
तोयवन्मेदिनीं तोयं मेदिनीमिव पश्यति।
अतीन्द्रियं निरीक्ष्येत न वेत्ति करसंस्थितम् ॥
F. 147. पृथिवीं शिवमाकाशमाकाशमिव मेदिनीम्।
आकाशमिव वात्मानं पूर्णमिन्दुमथातिथिम्।

Apparatus

2 after °दर्शन° C repeats 2 मरणाय to °दर्शनं° 3 प्रच्छंदनं C 5 श्रतो C 12 स्याद् C 17 °रंगुल्य C 20 श्लष्णं C for श्लथं 21 दुर्लभस्तस्य C 22 तोयवंदेदिनीं C 25 आकाश इव C °तिथौ C



कृष्णशुक्लविपर्यायं स्थूलसूक्ष्मविपर्ययम्।
विपर्यासं सदसतामीक्षते जीवितक्षमः ॥
षण्णां रसानां पर्यास इष्टानिष्टविपर्ययः ॥
सर्वधा ग्रहणं पश्येद्विग्रहातीन्द्रियग्रहैः।
अभक्ष्यं लोलुपत्यर्थं मरणायोपजायते ॥
शोभनं शोभनं श्रेयो ग्रहणे तु विपर्ययः।
सुरभीनामतिद्वेषो दुर्गन्धानामनिष्टता ॥
असुक्षयाय निर्देश्यं प्रकृतेर्विकृतेर्यदि।
गीताय न वाद्यानामकस्माच्छृणुयाद् ध्वनिम् ॥
तनुवृत्ते न शृणुयाद्विपरीतं शृणोति वा।
वाचं दद्यादनाहूत आहूतो न शृणोति वा ॥
दिव्यं ध्वनिं वा शृणुयाच्छृणुयाद्वातिभैरवम्।
अयाचितामादिशति भिक्षामेहीत्यसुक्षयः ॥
यो न वेत्तीन्द्रियं ग्राह्यं वेत्ति वातीन्द्रियं नरः।
तपोयोगादृते देही देहमन्यं प्रयात्यसौ ॥
सुरभिर्यस्य सुरभिर्यस्य गन्धः प्रवर्तते।
अस्वस्थः स्वस्थदेहः स्यादृष्टं तज्जीवितान्तकृत् ॥
अवक्र····यो नाभी न कृष्ण····ी····रुम्।
अवक्रलावि वा यस्य पिण्डं पश्यत्यसौ य(म)म् ॥
F.148. परिश्रान्ते स्थिते व्यस्तेऽव्यस्ते जिह्मे विलोचने।
उल्लुल....घनो....क्वो विद्वष्टीकेऽविद्वष्टिके ॥
सुवर्णस्यावरहिते निमेषरहिते प्लुते।
निम्ने निमेषवहुले नेत्रे स्यातामसुक्षये ॥

Apparatus

2 °क्षमम् C 5 लोलमत्यर्थं C 7 °मनीष्टता C 13 भिक्षादेहीत्यसुक्षयम् C 19 °स्नाभि C

अकस्मात् पुष्पिता रूक्षा दग्धास्थिसदृशाश्चलाः ।
सूक्ष्मस्थूलविपर्यस्था विरलाः सहितास्तथा ॥
अतिदीर्घातिह्रस्वा वा नताः शर्करिणोषिताः ।
प्रकृत्या विकृता दन्ता दृश्यन्ते जीवितक्षये ॥
स्वरः प्रकृत्या विहितो विस्वरोऽतिस्वरः कृशः ।
अजैडकडङ्कारीणां पक्षिणां वासुसंक्षये ॥
सूक्ष्मार्थदर्शनी मन्दो ऽमन्दो ऽसूक्ष्मार्थदर्शनी ।
तपोयोगादृते ऽतीवबुद्धिः स्यात् प्राणसंक्षये ॥
इष्टैरनिष्टसंयोगो ऽनिष्टैरिष्टसमागमः ।
भयशौर्यविपर्यासो जायते प्राणसंक्षये ॥
अतिदीर्घोऽतिह्रस्वो वा सतमस्कोऽतिशीतलः ।
उच्छ्वासः प्राणसंत्यागे गतासूनां प्रजायते ॥
अनाहतानां शब्दः स्यादाहतानामशब्दता ।
कांस्यानामतिशब्दश्च मुमूर्षूणां सदा गृहे ॥
इति ॥

F.148 भट्टोत्पलविरचितायां यक्षेशमेधीययात्राविवृतौ सद्योरिष्टलक्षणाध्यायः पंचदशः ॥

अथ चित्तशुद्धिर्व्याख्यायते ॥ । तत्रादावेव तद्विज्ञानमाह ॥

पृष्टव्यो दैवविदा विश्रब्धमुपह्वरे नराधिपतिः ।
रिपुनिधनप्रणिधानं प्रति भवतः किं मनः कुरुते ॥ [14, 1]

दैवं वेत्तीति दैववित् । दैवविदा दैवज्ञेन विश्रब्धमनाकुलं स्पष्टार्थमुपह्वर एकान्तप्रदेशे सादरं वा नराधिपती राजा पृष्टव्यः । रिपुनिधनप्रणिधानं प्रति रिपोर्निधनं विनाशस्तस्य रिपुनिधनस्यप्रणिधानं प्रति । प्रणिधानं चित्तसमाधानमेकं नमस्कुरुत इत्यर्थः । रिपुनिधनप्रणिधानं प्रति रिपु-

Apparatus

1 दग्दा° C 6 °डकारीवा C 10 भयखेर्य° C 11 सतमस्के C 16 भट्टोत्पल° C यक्षेश्व° C 19 विसब्द° C



विनाशनिश्चयं प्रति । भवतस्तव । किं मनःकुरुते किं मनस्युत्साहो-ऽस्त्यनुत्साहो वेत्येतदुक्तं भवति । यथा राजेकान्तव्यवस्थितस्तदा दैवविदात्रान्तमापृच्छनीयो रिपुविनाशनिश्चयनिमित्तं भवतो मनस्युत्साहो न वेति ॥

अत्रैव विशेषमाह

ब्रूयात्स चेन्मम मनः प्रोत्सहते हर्षयेत्ततश्चैवम् ।
चित्तानुकूलता सिद्धिलक्षणं तत्र च श्लोकाः ॥ [14,2]

चेच्छब्दो यद्यर्थे । स राजा यद्येवं ब्रूयाद्वदेत् । यथा मम मनश्चित्तं प्रोत्सहते प्रोत्साहं विददाति ततस्तत्साद्धेतोर्नृपं राजानं हर्षयेत् प्रोत्साहयेत् ।
F 149. अतश्चित्तानुकूलता (सिद्धिलणं चित्तस्य मनसोऽनु)कूलताभीष्टस्य सिद्धेर्लब्धि-लक्षणम् । अनुकूले मनसि सर्वार्थसंपत्तयः । तत्र च तस्मिंश्चित्तानुकूल्य इमे श्लोका वक्ष्यमाणा ऋषिकृताः पठति ॥

तांश्चाह ॥

शुभाशुभानि सर्वाणि निमित्तानि स्युरेकतः ।
एकतश्च मनःशुद्धिस्तद्धि शुद्धं जयावहम् ॥ [14,3]

निमित्तानि चिह्नानि फलसूचकानि सर्वाण्येव निःशेषाणि शुभाशुभान्येकत एकस्मिन् पक्षे स्युर्भवेयुः । एकतोऽन्यस्मिन् पक्षे मनःशुद्धिश्चित्त-शुद्धिरेकैव फलदर्शिका । हि यस्मादर्थे । यस्मात् तच्छुद्धं मनः शुद्धं सर्वमेव विजयावहं विजयप्रदमिति ॥

अन्यदप्याह ॥

कियच्चिरं न लभ्येत निमित्तं गमनानुगम् ।
नन्वेव तु मनोऽनर्थं चिरेणाप्यनुमन्यते ॥ [14,4]

कियत् किमपि परिमाणं दिनं बहुकालं निमित्तं शकुनं गमनानुगं यात्रा-यामनुकूलं न लभ्येतावश्यं लभ्येत । नन्वेव तु एवं न गमनानुगं निमित्तं न लभ्येतावश्यं । मनश्चित्तमनर्थं विपरीतार्थं चिरेणापि कालेनानुमन्यते

Apparatus

7 सिद्धिर्लक्षणं C 9 °नृपं] °र्वधं C 25 लभ्येतावभ्यां C

F.149. ऽनुमननं करोति। एतदुक्तं भवति। यथा राजा दैवज्ञेन पृष्ट एवं वक्ति यथा रिपुनिधनप्रणिधानं प्रति मम मनो न प्रोत्सहते तदान्यस्मिन् काले पुनरपि नृपः पृष्टव्यः। नैवं यतश्चिरेणापि कालेन तस्य मनोऽनर्थमनु- मन्यत इति ॥

अन्यदप्याह ॥

निमित्तानुचरं सूक्ष्मं देहीन्द्रियमहत्तरम् ।
तेजो ह्येतच्छरीरस्थं त्रिकालफलविन्नृणाम् ॥ [14,5]

यदेतन्मनस्तन्निमित्तानुचरं निमित्तानां शुभाशुभानामनुचरं पश्चाद् गच्छेत्। सूक्ष्ममतीन्द्रियं तथा देहस्य शरीरस्येन्द्रियाणां बुद्धीन्द्रियाणां च महत्तरम- तिशयेन महत्। हि यस्मात्तेज आत्ममनसा संपृक्तं शरीरस्थं किल त्रिकालफलवित् त्रिकालं फलं भूतं भाव्यं भविष्यन्नृणां वेत्ति जानाति ॥

अन्यदप्याह ॥

प्रीतये न मनो ऽनर्थे नासिद्धावभिनन्दति ।
तस्मात् सर्वात्मना यातुरनुमेयं यथा मनः ॥ [14,6]

अनर्थे विपरीतार्थे मनश्चितं न प्रीतये प्रीतिं न भजते। असिद्धौ पराजये नाभिनन्दति न तुष्टिमनुविददाति। तस्माद्धेतोर्नैमित्तिकेन च सर्वात्मना प्रयत्नेन यातुर्विजिगीषोरनुमेयं तर्कनीयं यथा मनश्चित्तमिति ॥

end. F 149

भट्टोत्पलविरचितायां यक्षेशमेधीययात्राविवृतौ। (चित्तशुद्ध्यध्यायः षोडशः ॥)

---

Apparatus

7 त्रिकालं ह वितर्य्यणाम् C 11 त्रिकालफलवर्त्तकालं C
19 भटोत्पल° C यक्षेश्व° C

# यक्षेश्वमेधीययात्रा*

॥ हरिः ॥ श्रीगणपतये नमः ॥ अविघ्नमस्तु ॥

ब्रह्माजशङ्कररवीन्दुकुजज्ञजीव-
शुक्रार्कपुत्रगणपुलगणनाथ शुरून् प्रणम्य ।
यस्सङ्ग्रहोऽर्कवरलाभविशुद्धबुद्धेः
रावन्तिकस्य तमहं विवृणोमि कृत्स्नम् ॥ १ ॥

यच्छास्त्रं सविता चकार विपुलैः स्कन्धैस्त्रिभिर्ज्योतिषां
तस्योच्छित्तिभयात्स्वयं कलियुगे संश्रित्य यो भूतलम् ।
भूयस्त्वल्पतरं वराहमिहिरव्याजेन सर्वं व्यधात्
इयं यः प्रवदन्ति मोक्षकुशलास्तस्मै नमो भास्वते ॥ २ ॥

वराहमिहिरोदधौ सुबहुभेदतोयाकुले
ग्रहर्क्षराणयादसि प्रचुरयोगरत्नोज्ज्वले ।
भ्रमन्ति परितो यतो लघुधियोऽर्थलुब्धास्ततः
करो[मि] विवृतिप्लवं निजधियाहमत्रोत्पलः ॥ ३ ॥

सिद्धिच्छोतृ [श्श्रोतृ] प्रभृतीनां सम्बन्धकथनाद्यतः ।
तस्मात्सर्वेषु कार्येषु सम्बन्धः पूर्वमुच्यते ॥ ४ ॥

किमेवात्राभिधेयं स्यादिति पृष्टस्तु केनचित् ।
यदि न प्रोच्यते तस्मै फलशून्यं तु तद्भवेत् ॥ ५ ॥

सर्वस्यैव हि शास्त्रस्य कर्मणोवापि कस्यचित् ।
यावत्प्रयोजनं नोक्तं तावत् तत्केन गृह्यते ॥ ६ ॥

शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः ।
छन्दसां लक्षणश्चैव षडङ्गो वेद उच्यते ॥ ७ ॥+

---

*The title should be यक्ष्येश्वमेधीयम्-सव्याख्यानम् ref. General Editor's A word. No of the Ms. R 15421 of this Library.

+ 1 to 7 verses are idential with 1 to 7 verses of the commentary of this author on Bṛhat samhitā. The suggestions of this portion are as found in the Bṛs. comm.

ना[सा]म्नो जीवस्स भृगुतनयो दण्डनाथो [थौ] कुजार्कौ
दानस्येन्दुशिशखियमबुधास्सासुरा भेदमाथा: ।
वीर्योपेतैरुपचयगतैर्लग्नगै: केन्द्रगैर्वा
तत्तत्सिद्धिं व्रजति तदह:स्वंशके वासि तेषाम् ॥ ८ ॥

यानं यायिभिरासनं शुभकरैर्वीर्यान्वितैर्नागरै:
द्वैधीभावमियाद्यदा शुभकरा: पौरान्वयायिग्रहा: ।
सौम्यैस्सिद्धिरसद्ग्रहैश्च बलिभिर्युद्धेऽनुकूले जय:-
स्सर्वैरप्यशुभग्रहेर्नि[र्न]रपतिर्दैवासितं संश्रयेत् ॥ ९ ॥

आटविकदेशरिपुमित्रमौलश्रेणीभृतकबलवीर्वेशा: ।
सूर्यादिभिरनुकूलैस्तदुदयवर्गैश्च तत्सिद्धि: ॥ १० ॥

**यस्येऽश्वमेधेन विजित्य धात्री-**
**मित्येवमभ्युद्यमिनो नृपस्य ।**
**विनिघ्नतो विघ्नकरान्नवाप: [पापं]**
**क्रियाक्रमेणेव पशून्मखेषु ॥ ११ ॥** [1, 2]

**उत्साहमन्त्रप्रभुशक्तियुक्तो**
**धीमान्विनीतेन्द्रियभृत्यवर्ग: ।**
**प्रजानुरक्तो धृटिमान् सहिष्णु:**
**वृद्धोपसेवी विर्जिगीषुरिष्ट: ॥ १२ ॥** [1, 3]

दाक्ष्यं शैघ्र्यं तथा मन्त्रशौर्यं चोत्साहलक्षणम् ।
गुणैरेतैरुपेत: सन्राजा भवितुमर्हसि ॥ १३ ॥

स्मृतिस्तल्प[त्प]रतार्थेषु वितर्को ज्ञाननिश्चय: ।
दृढता मन्त्रशक्तिश्च मन्त्रसम्पत्प्रकीर्तिता ॥ १४ ॥

कोशदण्डबलैश्चैव प्रभुशक्तिरुदाहृता ।
विजिगीषुस्तया युक्तो विचयेत्स रिपून् सदा ॥ १५ ॥

शक्तित्रितययुक्तस्य वशे तिष्ठति मेदिनी ।
शुश्रूषा श्रवणश्चैव ग्रहणं धारणं तथा ॥ १६ ॥



ऊहापोहार्थविज्ञानं तत्वज्ञानञ्च धीगुणा: ।
बुद्धया युक्तो वशे कुर्याच्छत्रूनतिबलानपि ॥ १७ ॥

श्रोत्र[त्रे]त्वक् चक्षुषी जिह्वा नासिका चेति पञ्चमी ।
पञ्चबुद्धीन्द्रियाण्याहुर्मनष्षष्ठानि तानि तु ॥ १८ ॥

पायूपस्थौ हस्तपादौ वाक्चैव तत्र पञ्चमी ।
पञ्चकर्मेन्द्रियाण्याहुर्बलषष्ठानि तानि तु ॥ १९ ॥

जितात्मना नरेन्द्रेण शक्यो भृत्यजयो भवेत् ।
जितभृत्येन शक्येयं कृत्स्ना जेतुं वसुन्धरा ॥ २० ॥

सततं निग्रहे युक्त इन्द्रियाणां भवेन्नर: ।
इच्छन्नर्थांश्च धर्मांश्च द्विषतां च पराभवम् ॥ २१ ॥

धर्मार्थौ य: परित्यज्य स्यादिन्द्रियवशानुग: ।
श्रीप्राणधनदारेभ्य: क्षिप्रं स परिहीयते ॥ २२ ॥

जितभृत्यं जितामात्यं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं दान्तं नरं श्रीर्जुषते सदा ॥ २३ ॥

जितेन्द्रियत्वं विष[न]यस्य कारणं
गुणप्रकर्षो विनयादवाप्यते ।
गुणाधिके पुंसि जनोऽनुरञ्ज्य[ज्य]ते
जनानुरागप्रभवा हि सम्पद: ॥ २४ ॥

अनुरूपाणि कर्माणि भृत्येभ्यो य: प्रयच्छति ।
स भृत्यबलसम्पन्नो राज्यस्य फलमश्नुते ॥ २५ ॥

यस्तु क्लेशसहो राजा तस्येयं[दं]वसुधामहं[तलम्] ।
क्षमावता नरेन्द्रेण शक्य: पुरुषसङ्ग्रह: ॥ २६ ॥

सङ्गृहीतनरस्येयं सकला वसुधा वशे ।
वृद्धोपसेवी नृपति: पात्रतामेति सम्पदाम् ॥ २७ ॥

प्रज्ञावृद्धं कर्मवृद्धं स्वबन्धुं
    विद्यावृद्धं वयसा चापि वृद्धम् ।
कार्याकार्ये पूजयित्वा प्रसाद्य
    संप्रच्छन्नोव (पृछन्नेवाव)? सह्येत्कदाचित् ॥ २८ ॥

वृद्धान् सेवेत सततं विप्रान् वेदविदः सुधीः ।
वृद्धसेवीति सततं रक्षोभिरभिपूज्यते ॥ २९ ॥

सततं गुरुपूजा च वृद्धानां पर्युपासनम् ।
श्रवणञ्चैव शास्त्राणां कूटस्थं श्रेय उच्यते ॥ ३० ॥

विद्यावृद्धान् हि सततं उपासीत महीपतिः ।
शृणुयात् भाषितं तेभ्यो ह्यर्थञ्चैवावधारयेत् ॥ ३१ ॥

विद्यावृद्धान् वयोवृद्धान् बुद्धिवृद्धांश्च मानवान् ।
श्रुताभिजनवृद्धांश्च न ह्यमूढोऽवमन्यते ॥ ३२ ॥

सम्बन्धश्च प्रकृतिभिर्महोत्साहः कृतश्रमः ।
जेतुमीषणशीलश्च विजिगीषुरिति स्मृतः ॥ ३३ ॥

रक्तासिताद्या हि यथाम्बरस्य
    वर्णा सितस्येव भवन्ति सम्यक् ।
विलग्नतिथ्यादिगुणास्तथैव
    विशुद्धदोषस्य भवन्ति यातुः ॥ ३४ ॥ इति

यात्रा विशुद्धापि तथा प्रवृत्ता
    पात्रानुरूपाणि फलानि धत्ते ।
जगद्युतीर्णावि[जगत्युदीर्णापि]हि कौशिकस्य
    भा भानवी नैव तमः प्रमार्ष्टीः[ष्टिं] ॥ ३५ ॥

गुणान्वितस्यैव गुणान् करोति
    यात्रा शुभा सङ्ग्रहलग्नयोगात् ।
व्यर्था सदोषस्य गुणान्विताऽपि
    वीणेव शब्दान् श्रित[श्रुति]वर्जितस्य ॥ ३६ ॥



गुणैस्समस्तैरपि संप्रयुक्ता
    कन्येव यात्रा विगुणाय दत्ता ।
करोत्यकीर्तिं सुखवित्तहानिं
    पात्रान्तरा ज्ञानजलस्य दातुः ॥ ३७ ॥

**सांवत्सरस्तस्य विहीन[नीत]वेषो**
    **धीमान् स्वतन्त्राङ्गपटुः कुलीनः ।**
**दक्षः प्रगल्भोऽविकलो विनीतः**
    **तादृग्विधस्तस्य पुरोहितोऽपि ॥ ३८ ॥** [I.4]

यस्तु सम्यग्विजानाति होरागणितसंहिताः ।
अभ्यर्च्य स नरेन्द्रेण स्वीकर्तव्यो जयैषिणा ॥ ३९ ॥ [Br. Sam. II 19.]

कर्माणि च त्रिधावृत्तभृतिश्चाप्यन्वयागता ।
वृत्तं श्रुतिश्च योनिश्च सप्ताङ्गं कुललक्षणम् ॥ ४० ॥

विमृश्य यः प्रारभते समृद्धो नापत्सु यो न व्यथते स धीरः ।
यस्यार्यवृत्तेऽस्ति रतिस्स साधुर्नित्योद्यतः कर्मसु यस्सदक्षः ॥ ४१ ॥

हिंसादम्भानृतस्तेयद्रिष्टारिह ? विवर्जितम् ।
नरेन्द्रहितमक्रोधं श्रेष्ठ कालविदं विदुः ॥ ४२ ॥

लक्ष्मण्येन कुलीनेन स्कन्धत्रयविदा नृपः ।
सांवत्सरेण क्ष्मां कुर्यात् सहायेनाखिलां वशे ॥ ४३ ॥

नक्षत्रकल्पो वैतानस्मृतिर्ये[र्या]संहिताविधिः ।
चतुर्थो अङ्गिराकल्पः शान्तिकल्पस्तु पञ्चमः ॥ ४४ ॥

पञ्चकल्पविधानज्ञमाचार्यं प्राप्य पार्थिवः ।
सर्वोत्पातप्रशान्ताय भुनक्ति वसुधां चिरम् ॥ ४५ ॥

**उत्थानवीरो[हीनो] राजा हि बुद्धिमानपि सर्वदा ।**
**प्रधर्षणीयश्शत्रूणां भुजङ्ग इव निर्विषः ॥ ४६ ॥** [I.12]

**उत्थानधीरः पुरुषो वाग्धीरानति[धि]तिष्ठति ।** [I.13]
**उत्थानधीरं वाग्धीरा रमयान्तु[यन्त]उपासते ॥ ४७ ॥**

विधानगणनाजडः पुरुषकारसुप्तादरः
मनोरथपरिश्रमैर्न परिचुम्बति श्रीमुखम् ।
पराक्रमविनिश्चितैकसुनयोगि[हि]सद्य[ः]कृतं
हरिर्मदसुवासितं पिबति कुञ्जरासृङ्मधु ॥ ४८ ॥ [I.14]

कृषिवृष्टिसमायोगात् दृश्यन्ते फलसिद्धयः ।
अस्मिन्नर्थे शृणु श्लोकान् द्वैपायनमुखोद्गतान् ॥ ४९ ॥ [I. 15]

न विना मानुषं दैवं दैवं वा मानुषं विना ।
नैव निर्वर्तयत्यर्थमेकारणिरिवानलम् ॥ ५० ॥ [I. 16]

सिध्यन्ति सर्व आरम्भास्संयोगात्कर्मणोर्द्वयोः ।
दैवात् पुरुषकाराच्च न त्वेकस्मात् कदाचन ॥ ५१ ॥ [I. 17]

अथ शास्ति नरं दैवमि[मी]हस्वेत्यनुशासकम् ।
ईशा[हा]नस्य भविष्यामि कुतःफलमनीहतः ॥ ५२ ॥ [I. 18]

यत्नेन संपाद्य मनुष्यकारं यत्नावकाशे पुरुषो निरुद्धे ।
प्रतीक्षते दैवमतन्द्रितो यः तमापदो नात्मकृतं स्पृशन्ति ॥ ५३ ॥ [I. 19]

सत्त्वार्जितं कर्मफलं सुखेन विवद्य[पद्य]ते राजसमुद्यमेन ।
कृच्छ्रेण शेषं महता यतोऽतो भाग्यानि मृग्याणि नृभिर्नृकारैः ॥ [I.20]

प्रथमोऽध्यायः समाप्तः ॥

——o——

## अथ द्वितीयोऽध्यायः ॥

यात्राकालमतः परं मुनिमतान्यालोक्य संक्षेपतो
वच्म्युद्दिश्य पृथूक्तलक्षणगुणैस्संपन्नमीशं भुवः ।
ज्ञाते जन्मनि तस्य यानसमयं वाञ्छन्ति होराविद-
स्त्वज्ञातेऽस्य फलं घुणाक्षरमिव प्राहात्र रत्नावलिः ॥१॥ [II.1]

उत्कृष्टबलवीर्यस्य विजिगीषोर्जयैषिणः ।
गुणानुरक्तप्रकृतेर्यात्रा यानमिति स्मृतम् ॥ २ ॥





उन्मानमानगतिसंहतिसारवर्ण-
स्नेहस्वरप्रकृतिसत्वमनूकमादौ ।
क्षेत्रं प्रजाश्च विधिवत् कुशलोऽवलोक्य
सामुद्रविद्वदति यातमनागतं वा ॥ ३ ॥

त्रिषु विपुलो गम्भीरस्त्रिष्वेष षडुन्नतश्चतुर्ह्रस्वः ।
सप्तसु रक्तो राजा पञ्चसु दीर्घश्च सूक्ष्मश्च ॥ ४ ॥

नाभिस्स्वरस्सत्वमिति प्रशस्तं गम्भीरमेतत्तितयन्नराणाम् ।
उरो ललाटं वदनञ्च पुंसां विस्तीर्णमेतत्त्रितयं प्रशस्तम् ॥ ५ ॥

वक्षोऽथ कुक्षौ न[क्षिन]खनासिकास्यं कृकाटिका चेति षडुन्नतानि ।
ह्रस्वानि चत्वारि च लिङ्गपृष्ठे ग्रीवा च जङ्घे च हितं प्र[तप्र]दानि ॥ ६ ॥

नेत्रान्तपादकरताल्वधरोष्ठजिह्वाः
रक्ता नखाश्च खलु सप्त सुखावहानि ।
सूक्ष्माणि पञ्च दशनाङ्गुलिपर्वकेशा-
स्साकन्त्वचा कररुहाश्च न दुःखितानाम् ॥ ७ ॥

हनुनासिकबाहुलोचना[नं] स्तनयोरन्तरमत्र पञ्चमम् ।
इ[अ]तिदीर्घमिदं तु पञ्चकं न भवत्येव नृणामभूभुजाम् ॥ ८ ॥

पादौ सगुल्फौ प्रथमं प्रदिष्टं जङ्घे द्वितीयं तु सजानुचक्रे ।
मेढ्रोरुमुष्काश्च ततस्तृतीयं नाभिः कटिश्चेति चतुर्थमाहुः ॥ ९ ॥

उदरं कथयन्ति पञ्चमं हृदयं षष्ठमथ स्तनान्वितम् ।
अथ सप्तमंसजत्रुणी कथयन्त्यष्टममोष्ठकन्धरे ॥ १० ॥

नयने नवमञ्च सभ्रुणी सललाटं दशमं शिरस्तथा ।
अशुभेष्वशुभं दशाफलं चरणाद्येषु शुभेषु शोभनम् ॥ ११ ॥

राजानं प्रथमं विन्देत् ततो भार्यां ततो धनम् ।
राजन्यसति लोकेऽस्मिन् कुतो भार्या कुतो धनम् ॥ १२ ॥

श्रियः सकाशादर्थश्च श्रीश्च राज्ञि प्रतिष्ठिता ।
सुकृतस्य क्षयाच्चैव स्वर्लोकादेत्य मेदिनीम् ॥ १३ ॥

पार्थिवो जायते तात दण्डनीतिविशारदः ।
महत्त्वेन च संयुक्तो वैष्णवेन नरो भुवि ॥ १४ ॥

बुद्ध्या भवति संयुक्तो माहात्म्यमधिगच्छति ।
न हि राजावमन्तव्यो मनुष्य इति भूमिपः ॥ १५ ॥

महती देवतान्येषां नररूपेण तिष्ठति ।
तस्मान्नृपतिमुद्दिश्य यात्राकरणमुच्यते ॥ १६ ॥

जन्मक्रमोद्दिष्टविकल्पदृष्टं संपन्नभाग्यं विजगीषमाणम् ।
नृपं नृपाचारगुणोपपन्नमुद्दिश्य संयानविधिं विधास्ये ॥ १७ ॥

**विदिते होराराशौ स्थानबलपरिग्रहे ग्रहाणाश्च ।**
**आयुषि च परिज्ञाते शुभमशुभं वा फलं वाच्यम् ॥१८॥** [II.2]

रिक्तोपगतदशायां जन्मोदयं नाथशत्रुपाके च ।
स्वदेशकारकदशस्संश्रयणीयो नरेन्द्रपतिः ॥ १९ ॥

**अन्ये वदन्त्यविदितेऽपि हि जन्मकाले**
**योग्यप्रयाणसमयो मनुजेश्वराणाम् ।**
**प्रश्नोदयोद्भवफलं सदसद्विभज्य**
**तत्वार्थविन्निगदति स्म वचो वसिष्ठः ॥ २० ॥** [II.3]

**अपृच्छतः पृच्छतो वा जिज्ञासोर्यस्य कस्यचित् ।**
**होराकेन्द्रत्रिकोणेभ्यस्तस्य विद्याच्छुभाशुभम् ॥ २१ ॥** [II.4]

केन्द्रत्रिकोणेषु शुभाश्रितेषु पापेषु केन्द्राष्टमवर्जितेषु ।
सर्वार्थसिद्धिं कुरुते नराणां विपर्ययस्तेषु विपर्यये स्यात् ॥ २२ ॥

**दैवज्ञस्य हि दैवेन सदसत्फलवाञ्छतः ।**
**अवशो गोचरं मर्त्यस्सर्वस्वमुपनीयते ॥ २३ ॥** [II. 5]

**अश्रौषीच्च पुरा विष्णोर्ज्ञानार्थं समुपस्थितः ।**
**वचनं लोकनाथस्य निःसृतं मुखपङ्कजात् ॥ २४ ॥** [II. 6]

यद्दानवेन्द्राय मयाय सूर्यश्शास्त्रं ददौ संप्रणताय पूर्वम् ।
विष्णोर्वसिष्ठस्य[श्च]महर्षिमुख्यो ज्ञानामृतं यः परमाससाद ॥ २५ ॥



**यत्सारं पृच्छतः पुंसो ग्रहहोराश्रयं फलम् ।**
**तत्सारं तस्य तज्जन्म यद्यप्यन्यगृहे भवेत् ॥ २६ ॥** [II. 7]

**जन्मसमये यदुक्तं शुभाशुभन्निर्विशेषमाचार्यैः ।**
**पृच्छाकाले नृणां तदेव भवतीति विज्ञेयम् ॥ २७ ॥** [XI.13]

**बुद्ध्वा शास्त्रं यथान्यायं बलाबलविधानतः ।**
**यथोक्तं जातके सर्वं तथा तत्रापि चिन्तयेत् ॥ २८ ॥** [II.8]

**तस्मान्नृपः कुसुमरत्नफलाग्रहस्तः**
**प्रातः प्रणम्य रवये हरिदिङ्मुखस्थः ।**
**होरागत[ते]कुशलिनो हितकारिणश्च**
**सङ्गृह्य दैवगणकान् सकृदेव पृच्छेत् ॥ २९ ॥** [II.9]

इत्येवमेषामपि कल्पितानां क्रिया विभागार्थमुशन्ति राशिम् ।
अन्योन्यसंयोगविकल्पनाभिरिदं समुद्राम्बुभिरप्रमेयम् ॥ ३० ॥

वेलास्सर्वाः प्रशस्यन्ते पूर्वाह्णे परिपृच्छतः ।
सन्ध्ययोरपराह्णे च क्षपायां च विगर्हिताः ॥ ३१ ॥

**अथ नृपतिसमीपे दैववित् पृष्टमात्रः**
**फलमुदयनिमित्तैस्तर्कयेच्छास्त्रबुद्ध्या ।**
**सदसि सदिति वाच्यं यद्यपि स्यादसत्तत्**
**स्फुटमपि कथनीयं भूभुजो मन्त्रिणो वा ॥ ३२ ॥** [II.10]

यस्य मन्त्रं न जानन्ति समागत्य पृथक् जनाः ।
स कृत्स्नां पृथिवीं .... .... .... ॥ ३३ ॥

आश्रित्य चन्द्रस्य बलाबलानि
ग्रहाः प्रयच्छन्ति शुभाशुभानि ।
मनस्समेतानि यथेन्द्रियाणि
कर्मण्यतां यान्ति न केवलानि ॥ ३४ ॥

गोचरेण शुभदः शशी न चेत् अष्टवर्गपरिशोधितोऽपि वा ।
पूर्ववायुरिव पुष्पकालजो यायिनां फलविनाशकृद्भवेत् ॥ ३५ ॥

स्वपक्षग्रहवैपुल्यन्नवनक्षत्रशुद्धता ।
दैवस्याप्रतिकूलत्वमुत्पातानामसम्भवः ॥ ३६ ॥

सुवृष्टिसस्यसम्पच्च सुभिक्षं क्षेममेव च ।
ईप्सितार्थोपपत्तिश्च दैवं विद्यात् बहिस्थितम् ॥ ३७ ॥

आक्षेपशीलः पु[प]रुषाभिधायी
विरक्तभृत्यः परदारगामी ।
लुब्धोऽसहायो व्यसनी कृतघ्नः
स्थितिप्रभेत्ता करशीर्णराष्ट्रः ॥ ३८ ॥ [XXX, 1]

विस्रंभहा क्रोधपरो नृशंसः
क्षुद्रप्रमादी न बहुश्रुतश्च ।
दिव्यान्तरिक्षक्षितिजैर्विकारैः
निपीडितो यश्च स दैवहीनः ॥ ३९ ॥ [XXX, 2]

अतो विपर्यस्तगुणेन राज्ञा
तादृग्विधोऽरिस्त्वभियुक्तमात्रः ।
तरुर्गजैर्दग्ध[जग्ध]श्वास्तवीर्यो
महानपि क्षिप्रमुपैति भङ्गम् ॥ ४० ॥ [XXX 3]

कर्मणा मनसा वाचा सर्वभूतेषु तिष्ठता (?)
देवतातिथिभृत्येभ्यः प्रणामनिरतस्तदा ॥ ४१ ॥

शौचमार्जवमानृण्यमास्तिक्यं श्रद्धधानता ।
आत्मतत्वं(?)प्रियत्वञ्च शौचं बाह्यं तितिक्षता ॥ ४२ ॥

अनुगूढो वाङ्मनसोर्दयास्त्रीरत्नसम्भवः ।
असज्जाश्चाप्यकार्येषु कीर्तिरारोग्यमेव च ॥ ४३ ॥

अमन्दता युद्धजयं प्रशस्तश्च प्रदर्शनम् ।
लाघवञ्च प्रहर्षश्च दैवमात्मभूतां विदुः ॥ ४४ ॥



उदयमुदयपं वा जन्मभं जन्मपं वा
तदुपचयगृहं वा वीक्ष्य लग्ने यियासोः ।
विनिहतमरिपक्षं विद्धि शत्रोरिदं वा
यदि हिबुकसमेतं पृच्छतोऽस्तस्थितं वा ॥ ४५ ॥ [II. 13]

जन्मर्क्षोदयलग्ने तदधिपयोर्वा यियासतः प्रश्ने ।
त्रिषडेकादशदशकोदयेषु लग्नेषु च जयस्स्यात् ॥ ४६ ॥

शत्रोर्होराराशिस्तदधिपतिर्जन्मभं तदीशो वा ।
यदि संस्थितो हिबुके तथापि शत्रुर्हतो वाच्यः ॥ ४७ ॥

पार्ष्णिग्राहः पृष्ठतो भास्करस्य
प्राग्यातव्यस्तिग्मरश्मिश्च याता ।
आक्रन्दोऽर्कात्सप्तमे यःस्थितश्च
तत्तुल्यास्ते शक्तितश्चिन्तनीयाः ॥ ४८ ॥ [II.14]

सूर्याक्रान्तांशकात्पश्चाद्यो ग्रहस्समवस्थितः ।
आभागनवतेर्ज्ञेयस्स पार्ष्णिग्राहसंज्ञकः ॥ ४९ ॥

स्वयमेव रविर्याता ज्ञेयमेषां बलाबलम् ।
पार्ष्णिग्राहादयस्सर्वे बलिभिर्वलिनः स्मृताः ॥ ५० ॥

जीवज्ञार्किसितापरैः सुतसुहृद्दुश्चिक्यलग्नायगै- ।
स्सिद्धार्थोऽरिगणान्विजित्य नचिरात्प्रष्टा समेत्यालयम् ।
लग्ने वा कुजमन्दयोः सुतगते जीवे रवौ कर्मगे
लाभे कर्मणि वा सितेन्दुतनयौ प्रष्टुर्जयो निश्चयः ॥ ५१ ॥
[II. 15]

अस्मिन्नेव भवेद्योगे यदि शुक्रोऽष्टमाश्रितः ।
प्रष्टार[स]मुद्यमादेव हतशत्रुर्विशत्यरिः[पि] ॥ ५२ ॥ [II.16]

लग्ने यमारौ खे सूर्यश्शुक्रो मृत्यौ सुते गुरुः ।
लाभे कर्मणि वा सौम्ये योगेऽस्मिन्निश्चयो जयः ॥ ५३ ॥

गुर्वर्कशशिभिस्सिद्धिर्लग्नारिदशमस्थितैः ।
तद्वल्लग्नारिरन्ध्रस्थैर्जीवशुक्रदिवाकरैः ॥ ५४ ॥ [II.17]

सचिवाप्तिर्गुरावाये कर्मण्यसितवक्रयोः ।
चतुर्थे ज्ञेऽष्टमे चन्द्रे जायास्थे च सिते जयः ॥ ५५ ॥ [II.18]

कर्मण्यारे रवावाये तृतीयस्थेऽर्कनन्दने ।
चन्द्रे षष्ठे विलग्नस्थैः शेषैः प्रष्टुर्ध्रुवोजयः ॥ ५६ ॥ [II.19]

सहजेऽर्कार्किभूपुत्रैस्सौम्यैर्लग्नगतैर्जयः ।
गुरौ वा लग्नगे पापैर्लाभे कर्मणि वा स्थितैः ॥ ५७ ॥ [II. 20]

माहेययमयोष्षष्ठे लग्ने गुरुशशाङ्कयोः ।
सितचन्द्रजयोरन्त्ये जयःकर्मणि चोष्णगौ ॥ ५८ ॥ [II. 21]

इति योगाश्शुभाः प्रोक्ताः प्रश्नकाले यियासतः ।
अशुभा ये भवन्त्यत्र तान् प्रवक्ष्याम्यतः परम् ॥ ५९ ॥ [II. 22

युद्धे भङ्गो यमेन्द्वारैर्नवमात्मजलग्नगैः ।
शशाङ्कयमयोर्लग्ने मृत्युर्भूपुत्रदृष्टयोः ॥ ६० ॥ [II. 23]

सवक्रे निधने मन्दे मृत्युर्लग्ने दिवाकरे ।
चन्द्रे वा त्र्यायमृत्युस्थे ससूर्ये वा वदेद्वधम् ॥ ६१ ॥ [II.24]

वक्रज्ञशशिभिर्द्यूने प्रष्टुर्नाशोऽभिगच्छतः ।
क्षुन्मारशत्रुवृद्धिश्च लग्ने माहेयशुक्रयोः ॥ ६२ ॥ [II. 25]

चन्द्रावनिजयोर्मूर्तौ षष्ठे शशिजशुक्रयोः ।
निधनस्थे सहस्रांशौ विज्ञेयो मन्त्रिणो वधः ॥ ६३ ॥ [II.26]

तनयस्य वधः प्रष्टुः पापैरुदयपुत्रगैः ।
सचन्द्रे रुधिरे लग्ने भङ्गः सूर्यात्मजेक्षिते ॥ ६४ ॥ [II. 27]

द्यूननैधनयोश्चन्द्रे लग्नं याते दिवाकरे ।
विपर्यये वा यातस्य त्रासभङ्गवधागमाः ॥ ६५ ॥ [II. 28]



द्वित्रिकेन्द्रस्थितैः पापैः सौम्यैश्च बलवर्जितैः ।
अष्टमस्थे निशानाथे प्रष्टुर्बन्धवधात्ययाः ॥ ६६ ॥ [II. 29]

कुजचन्द्रमसोर्द्यूने स्वभेदोक्त[र्क]बुधोदये ।
तद्वन्मन्दारयोर्युद्धे भङ्गस्सौम्यार्कयोस्तथा ॥ ६७ ॥ [II. 30]

सर्वैस्तु नवमे राजा हन्ति मन्त्रिपुरोहितान् ।
योगेऽस्मिन्नुदये चन्द्रे सुतस्थपतिदेशिकान् ॥ ६८ ॥ [II.31]

अर्कार्कसुतयोर्लग्ने दृष्टयोः क्षितिसूनुना ।
चन्द्रेऽस्ते बलिभिः सौम्यैः प्रष्टुस्सेनापतेर्वधः ॥ ६९ ॥ [II.32]

लग्नस्थेऽर्के सपुत्रे च भौमदृष्टेऽस्तगश्शिखी ।
वीर्यहीनैरशुभैः प्रष्टुश्चमूनाथवधं वदेत् ॥ ७० ॥

निधने वक्रयमयोश्चन्द्रेऽस्ते लग्नगे रवौ ।
ज्ञे तृतीये च विक्रम्ये समन्त्री हन्यते नृपः ॥ ७१ ॥ [II.33]

मूर्धोदयं शुभसुहृद्युतवीक्षितं वा
लग्ने शुभाश्च बलिनश्शुभवर्गलग्नम् ।
सिद्धिप्रदं भवति नेष्टमतोऽन्यथा य-
ज्जन्मप्रयाणफलयुक्तिभिरन्यदूह्यम् ॥ ७२ ॥ ]II.34]

निधनहिबुकहोरा सप्तमर्क्षेषु पापाः
न शुभफलकरास्स्युः पृच्छतां मानवानाम् ।
दशमभवनयुक्तेष्वेषु सौम्याः प्रशस्ताः
वद सदिदमशेषं यानकाले विचिन्त्यम् ॥ ७३ ॥ [II.35]

द्वितीयोऽध्यायः समाप्तः ॥

## अथ तृतीयोऽध्यायः ॥

नन्दा विजया भद्रा रिक्ता पूर्णे[ति]संज्ञारूपम् ।
फलमेव ता विदध्युर्नेष्टा मध्याः प्रवराश्च ॥ १ ॥

**नन्दा भद्रा विजया रिक्ता पूर्णा च नामसदृशफलाः ।**
**न्यूनसमेष्टास्तिथयश्शुक्ले कृष्णे प्रतीपास्ताः ॥ २ ॥** [III. 1]

**सर्वाश्शस्ताः तिथयश्शुक्लपक्षे**
**हित्वा त्र्यंशं बहुळेऽन्त्यैश्च केचित् ।**
**षष्ठ्यष्टम्योर्वसु लब्ध्वापि याता**
**द्वादश्यां वा नाशमाशु प्रयाति ॥ ३ ॥** [III.2]

नन्दा भद्रा जया रिक्ता पूर्णा चैव तु पञ्चमी ।
तिथयः प्रतिपन्मुख्या नामतुल्यफलप्रदाः ॥ ४ ॥

शुक्ले कृष्णे तथैवा(पुनश्चा)न्त्यं हित्वा त्र्यंशं तथैव च ।
ता नामरूपफलदाः पक्षयोरुभयोरपि ॥ ५ ॥

न्यूना फलसमा चेष्टफला शुक्ले पक्षे परे च ताः ।
वैपरीत्येन विज्ञेया विशेषोऽत्राभिधीयते ॥ ६ ॥

षष्ठ्यां तिथौ तथाष्टम्यां द्वादश्यां यस्तु गच्छति ।
सोऽपि तत्त[त्रज]यं लब्ध्वा क्षिप्रमेव विनश्यति ॥ ७ ॥

**प्रतिपदि फलमेके पञ्चदश्यां च नेष्टं**
**जगुरिदमिति तज्ज्ञैर्याप्यमेवावधार्यम् ।**
**किमपि किमपि नूनं तैस्समीक्ष्योक्तमेतत्**
**समवचनविधाते युक्तता केन चिन्त्या ॥ ८ ॥** [III.3]

प्रतिपच्छुक्लपक्षे च पञ्चदश्यो(?) तथैव च ।
न याति याता स्वगृहं वित्तनाशं तथाश्नुते ॥ ९ ॥

तृतीयोऽध्यायः समाप्तः ॥

---



## अथ चतुर्थोऽध्यायः

**दिशि दिशि बहुलाद्यास्सप्तकाः प्राक्प्रवृत्ताः**
**पवनदहनदिक्स्थस्तिर्यगुर्गोत्रगत्युग्रदण्डः ।**
**सुरपतिरपि कृच्छ्रं याति तं लङ्घयित्वा**
**न च भवति विरोधो दिक्षु दण्डैकगासु ॥ १ ॥** [IV. 1]

प्राच्यादिसप्त सप्तक्रमेण धिष्ण्यानि कृत्तिकादीनि ।
आनुलोम्यादेकत्वं पूर्वोत्तरमपरयाम्याश्च ॥ २ ॥

अनिलानलदिग्भेरवां परिखाख्यां व्रजन्ति ये ।
समुत्क्रम्य इव कुलिशभृतः पतन्ति न चिरेण व्यसने ॥ ३ ॥

आग्नेयपूर्वाणि च सप्त सप्तक्रमेण पूर्वादिषु दिक्षु भानि ।
द्वारेषु मुख्येन कल्पितानि तेषु प्रयाणेषु दिशाजयस्स्यात् ॥ ४ ॥

प्राचि[ची]मुदग्द्वारिभिरभ्युपेयात्प्राग्द्वारिकैश्चोडुभिरप्युदीचि[ची]म् ।
तथैव याम्यामपराश्रितैश्च याम्याश्रितैश्चाप्यवरां प्रयायात् ॥ ५ ॥

अतोऽन्यथा यः परिघावदेदं[वं]
कुर्वञ्जयेऽस्मिन् नृपतिः प्रयायात् ।
स भूरिनागश्च बलोत्कटोऽपि
सङ्ग्रामदुर्गाम्भसि नाशमेति ॥ ६ ॥

**प्राग्द्वारिकैरनलदिङ् न विरोधमेति**
**शेषाः प्रदक्षिणगताः विदिशः प्रकल्प्याः ।**
**उल्लङ्घ्य दण्डमपि काममियान्नरेन्द्र-**
**श्शूलं विहाय यदि दिङ्मुखलग्नशुद्धिः ॥ ७ ॥** [IV.2]

**ज्येष्ठायां पुरुहूतदिङ्मुखगतः प्राप्तो बलिर्बन्धनं**
**याम्यामाजपदे मुरश्च गतवान् यातो मुरारेर्वशः ।**
**रोहिण्यान्नमुचिः प्रतीच्यभिसृतः चूर्णीकृतो वज्रिणा**
**सौम्यामार्यमदेवते च गतवान् मृत्योर्वशं शम्बरः ॥ ८ ॥**
[IV.3]

ज्येष्ठाजपैतामहफल्गुनीषु प्राच्यादिकाष्ठासु गताः महीपाः ।
बलिर्मुरोऽथो नमुचिः क्रमेण विनाशमीयुर्मधुकैटभौ च ॥ ९ ॥

ऋक्षेष्वथैतेषु यथोक्तकाष्ठां न भूतिकामो मनसापि यायात् ।
मोहादथोल्लङ्घ्य यद्रि प्रयायात् सराष्ट्रभृत्यो नचिराद्विनश्येत् ॥ १० ॥

ज्येष्ठा प्राग्भाद्रपदा रोहिण्योऽथोत्तराश्च फल्गुन्यः ।
शूलानि प्राच्यादिषु तेषु गतोऽभ्येति यदि चिलम् ॥ ११ ॥

**पुष्योऽथ हस्तश्रवणश्रविष्ठाः**
**प्राच्यादिमुख्यान्युदगश्वियुक् च ।**
**नैशाकरं त्वाष्ट्रमथानुराधा**
**पौष्णञ्च मध्यानि तथाहुरेके ॥ १२ ॥** [IV. 4]

पूर्वस्यामुत्तरन्तिष्यस्सौम्यन्तत्रैव मध्यमम् ।
याम्यां श्रेष्ठञ्च सावित्रं चित्रा तत्रैव मध्यमा ॥ १३ ॥

वारुण्यां वैष्णवं श्रेष्ठमनुराधा तु मध्यमा ।
कौबेर्यां वासवं श्रेष्ठमाश्विनञ्च परं स्मृतम् ॥ १४ ॥

पौष्णं मध्यफलं तत्र शेषर्क्षाणि विनिर्दिशेत् ॥ १५ ॥

**सार्वद्वारिकसंज्ञितानि गुरुभं हस्ताश्विमैत्राणि च**
**श्रेष्ठान्येन्दवपौष्णविष्णुवसुभान्याद्यैस्सहाष्टौ सदा ।**

सर्वद्वारिकसंज्ञं नक्षत्रचतुष्टयं विनिर्दिष्टम् ।
पुष्यो हस्तोऽश्विन्यौ नक्षत्रं मित्रदैवतञ्च ॥ १६ ॥

**रौद्राजाहिय(दानिदा)[मानिला]नलमखाशक्राग्निभिर्निन्दितं**
**यानं त्वाष्ट्रनिलान्तरे नियमयोः पित्र्योरगो[जे]चान्तरे॥१७॥**
[IV.5]

चैत्रास्वातिविशाखाभरणीं पित्र्येऽथकृत्तिकाश्लेषा ।
तान्यशुभानि च याने शेषाणि शुभानि धिष्ण्यानि ॥ १८ ॥



विवर्जयेत् त्वाष्ट्रयमोरगाणामधी[धं]द्वितीये[यं]गमने च ये स्युः ।
पूर्वार्धमाग्नेयमखानिलानां स्वतीमखावासभं समस्तम् ॥ १९ ॥

आद्ये मखे चतुर्भागे नैर्ऋतस्याद्य एव च ।
रेवत्यन्तचतुर्भागे विवाहाःप्राणनाशनाः ॥ २० ॥
चित्रास्वात्यन्तरे न[स]द्यः ? प्रस्थितानति[नि]वर्तिता ॥

**स्वे स्वे कर्मणि पूजितानि मुनिभिश्शुद्धानि सर्वाण्यपि**
**त्यक्त्वार्कोदयमानलेऽरिविषयं यात्रा दिधक्षोश्शुभाः ।**
**रोहिण्यान्तिसृषूत्तरासु विजयो यातुर्विशाखासु च**
**त्यक्त्वा वासरपूर्वभागमवदत् गर्गोऽधिराज्यार्थिनः ॥ २१ ॥**

स्वातौ निशांशे प्रथमेऽभिपृष्टे शस्यानि सर्वाण्युपयान्ति वृद्धिम् । [IV.6]
भागे द्वितीये तिलमुद्गमाषा ग्रैष्मी तृतीये तिनिशादयोऽपि ॥ २२ ॥

पृष्टे द्विभागे प्रथमे सुवृष्टिः तद्वत्तृतीये तु सकीटसर्पाः ।
वृष्टिस्तु मध्या[द्ये]परभागपृष्टे निच्छिद्रवृष्टिर्द्युनिशं प्रवृ[कृ](?)ष्टे ॥ २३ ॥

उत्तरायाश्च रोहिण्यां तथा चन्द्राग्निदेवते ।
पूर्वाह्णात्परतो यात्रामा[चा]धिराज्यार्थिनश्शुभा ॥ २४ ॥

न विशाखा रोहिण्योर्यायाद्दिनस्य पूर्वाह्णे ॥ २५ ॥

**मूलेन्द्रोरगशाङ्करेष्वरिवधे यायाद्दिनार्धादृते**
**भूत्यर्थं पवनाश्विसूर्यगुरुभेष्वह्नोऽपरार्धं विना ।**
**रात्र्यादौ तु न पौष्ण्यमित्रशशिभत्वाष्ट्रेषु वाञ्छेद्युति[ञ्छन्द्युतिं]**
**रात्रेर्मध्यमपास्य पूर्वभरणी पित्र्येषु हन्तुं परान् ॥२६॥**
[IV. 7]

ज्येष्ठा मूलाश्लेषा रौद्रेषु विवर्जयेत्तु मध्याह्नम् ।
स्वात्यश्विपुष्यहस्तेष्वपराह्णं वर्जयेद्याता ॥ २७ ॥

मैत्रैन्दवंचित्रारेवतीषु यायात्प्रदोषमुत्सृज्य ।
पूर्वासु तिसृषु यायात् विहाय मध्यनिशाम् ॥ २८ ॥

निशान्तभागे त्रिषु वैष्णवाद्ये-
षियाद्धनार्थी न पुनर्वसौ च ।
निषेधयत्यम्बुपसंज्ञकस्य
मध्याह्नमेके न निशान्तभागम् ॥ २९ ॥ [IV. 8]

निशान्ते दिनमध्ये च न यायाद्वारुणे नृपः ।
नायात्यवश्यं स्वगृहं वित्तनाशमवाप्नुयात् ॥ ३० ॥

यथेष्टवेलागमनं प्रशस्तं
हस्तैन्दवोपेन्द्रसुरेड्यभेषु ।
शुद्धा(?)प्रयाणं श्रवणे श्रियोऽर्थी
वसेन्न जातु क्षितिपस्स्वसीम्नि ॥ ३१ ॥ [IV.9]

सर्वेषु शुभाःकालाः श्रवणैन्दवपुष्यहस्तेषु ।

सौम्ये गत्वा ह्यष्टय[ध्युष्य]रौद्रेऽदितीशे
संप्रस्थाता बाधते शत्रुसङ्घान् ।
मैत्रे गत्वा पौरुहूतं समुष्य
मूले यायाच्छत्रुनाशाय भूपः ॥ ३२ ॥ [IV.10]

हस्ते गत्वा स्वातिचित्रे समुष्य
शक्राज्न्याख्ये प्रस्थितो बाधतेऽरीन् ।
तिष्ये पौष्णे वासरे चैकरात्रं
सीम्नि स्थित्वा भूतिमाप्नोति याता ॥ ३३ ॥ [IV.11]

ऋक्षेन्द्वाद्यै[पापैः]रसंयुतेऽन्तःप्रकोपो
लक्ष्मीभ्रंशो राहुणार्केण रोगः ।
केतूल्काभ्यां पीडिते देशनाशः
क्लेशस्सौरे सोष्णरश्म्यात्मजे च ॥ ३४ ॥ [IV.12]

दिग्दाहधूमपरिवेषविकम्पि[म्प]पांसु-
युक्तेष्वथामयगतश्रमरोगपीडाः ।



भिन्ने ग्रहेण वशतामुपयाति शत्रोः
सन्ध्यागतेऽशनिहते च विनाश उक्तः ॥ ३५ ॥ [IV.13]

नक्षत्रपटुकिरणं पश्चात् सन्ध्यागतं ग्रहैर्भिन्नम् ।
क्रूरनिपीडितदूषितश्चाशुभं सर्वम् ॥ ३६ ॥

उत्पातपापग्रहपीडिते भे ये यान्ति भूरिग्रहसंयुते च ।
ते पूर्ववित्तान्यपि नाशयन्ति धातुप्रसक्ता इव वादिकेन्द्राः ॥ ३७ ॥

जन्माद्यं कर्म ततो दशमं साङ्घातिकं च षोडशभम् ।
समुदयमाष्टादशभं विनाशसंज्ञं त्रयोविंशम् ॥ ३८ ॥ [IV.14]

आद्यात्तु पञ्चविंशं मानसमेवं नरस्तु षड्डृक्षम् ।
नवनक्षत्रो नृपतिस्स्वजातिदेशाभिषेकर्क्षे(?) ॥ ३९ ॥ [IV.15]

जन्मर्क्षमाद्यं दशमं तु कर्म साङ्घातिकं षोडशमृक्षमाद्यात् ।
अष्टादशं स्यात्समुदायसंज्ञं वैनाशिकं विंशतिभिस्त्रिभिश्च ॥ ४० ॥

यत्पञ्चविंशं खलु मानसं तत् षड्डृक्षमेवं पुरुष[स्य]सर्वैः [र्वे] ? ।
राज्ञो नवर्क्षाणि वदन्ति जातिदेशाभिषेकैः सहितानि राज्ञः[भज्ञाः] ॥ ४१ ॥

भिषेकसंज्ञर्क्षमुशन्ति मिश्रं साधारणे द्वे सह षड्भिराद्यैः ।
किन्त्वत्र दोषाश्च गुणाश्च सर्वे प्रधानमेकं पुरुषं भजन्ते ॥ ४२ ॥

कूर्मोपदिष्टानि हि देशभानि राज्याभिषेकेऽह्नि वाभिषेकम् ।
या जातयस्तस्य भवन्ति तस्मात् वक्ष्यामि दैवज्ञनिराकुलार्थम् ॥ ४३ ॥

पूर्वात्रयं सानलमप्रजानां राज्ञां तु पुष्येण सहोत्तराणि ।
सपौष्णमैत्रं पितृदैवतञ्च प्रजापतेर्भञ्च कृषीवलानाम् ॥ ४४ ॥

आदित्यहस्ताभिजिताश्विनानि वणिग्जनानां प्रवदन्ति भानि ।
मूलं त्रिनेत्रानिलवारुणानि भान्त्यु[न्त्य]प्रजातेः प्र[भ]विष्णुतायाः ॥ ४५ ॥

सौम्यैन्द्रचित्रावसुदेवतानि देवाजसा[ध]र्म्यमुपागतानि ।
सार्पं विशाखा श्रवणो भरण्यः चण्डालजातेरिति निर्दिशन्ति ॥ ४६ ॥

नक्षत्रत्रयवर्गैराग्नेयाद्यैर्व्यवस्थितैर्नवधा ।
भारतवर्षे मध्ये प्रागादिविभाजिता देशाः ॥ ४७ ॥

पाञ्चालनाथो मगधाधिपश्च
कलिङ्गराडुज्जयिनीपतिश्च ।
अवन्तिराट् सैन्धवभारगौरो
मद्रेश्वरोऽन्यश्च कुणिन्दनाथः ॥ ४८ ॥

एते हि कूर्माङ्गसमाश्रितानाम् ।
विशेषपीडामुपयान्ति भूपाः ॥ ४९ ॥

**नामानुरूपमेषां सदसत्फलमिष्टपापगुणदोषैः ।**
**ओजर्क्षादिविशुद्धो याता शत्रूञ्जयत्यचिरात् ॥५०॥** [IV.16]

रोगाद्यागमवित्तनाशकलहासंपीडितो जन्मभे
सिद्धिं न[क]र्मे न याति कर्मणि हते भेदस्तु साङ्घातिके ।
द्रव्यस्योपचितस्य सामुदयिके संपीडिते संक्षयः
वैनाशे तु भवन्ति कायविपदश्चिन्तासुखं मानसे ॥ ५१ ॥

निरवद्रुतभो निरामयस्सुतभाङ्नष्टरिपुर्धनान्वितः ।
षड्डुपद्रुतभो विनश्यति॰त्रिभिरन्यैश्च सहावनीश्वरः ॥ ५२ ॥

**जन्मभकर्माधानादितस्तु संपद्विपत्करक्षेम्याः ।**
**प्रत्यरसाधकवैनाशिकाश्च मैत्रातिमैत्रे च ॥ ५३ ॥** [IV.17]

ये[न] सञ्जायते जन्तुस्तज्जन्मर्क्षमिति स्मृतम् ।
तस्मादेकोनविंशं यत्तत् गर्भाधानभं भवेत् ॥ ५४ ॥

**मैत्रातिमैत्रसाधकसंपत्क्षेम्येषु कर्मभे चार्थात् ।**
**प्राप्नोति नावशेषेष्वभिषेकपुरर्क्षयातश्च ॥ ५५ ॥** [IV.18]

**सितसिद्धार्थकशालिप्रियङ्गुमदयन्तिकाम्बुभिः पुष्ये ।**
**स्नात्वा गच्छेत्प्राचीं सौम्ये च हेममणितोयैः ॥५६॥** [IV.19]



**गोशृङ्गाग्रनदीगिरिवल्मीकतटाकमृत्स्नया युक्तैः ।**
**तोयैस्स्नात्वा नृपतिर्यायाद्याम्यां दिशं हस्ते ॥५७॥** [IV.20]

**सरिदुभयकूलमृद्भिस्स्नात्वा मैत्रे परां दिशं यायात् ।**
**श्रवणे तु नदीसङ्गमृत्सलिलैः पश्चिमामेव ॥ ५८ ॥** ]IV.21]

**मधुभद्रदारसहितैस्स्नात्वा तोयैरुदक् श्रविष्ठाभिः ।**
**गोगजविषाणकौशैर्मधुघृतपूर्णे उदक्पौष्णे ॥ ५९ ॥** [IV.22]

**उदगेवाश्विनि देवे स्नात्वा मधुयूथिकायुतैरद्भिः ।**
**नक्षत्रदेवमन्त्रैश्चाग्निं हुत्वा जयं लभते ॥ ६० ॥** [IV.23]

**प्राच्यादि घृतं तिलोदनं मत्स्यं क्षीरमिति प्रदक्षिणम् ।**
**अद्यन्नृपतिर्यथादिशन्नक्षत्राभिगतश्च सिद्धये ॥ ६१ ॥** [IV. 28]

अश्वियमदहनकमलजशशिशूलभृश[द]दितिजीवफणिपितरः ।
योन्यर्यमदिनकृत्त्वष्टृपवनशक्राग्निमित्रश्च ॥ ६२ ॥

शक्रो निर्ऋतिस्थोऽयं विश्वे ब्रह्मा हरिर्वसुर्वरुणः ।
अजपादोऽहिर्बुध्न्यः पूषा चेति च[तीश्व]रा भानाम् ॥ ६३ ॥

**अक्षतमाषाः स्विन्नास्तिलसहितास्तण्डुलाश्च दधि गव्यम् ।**
**पृषतपिशितं मृगस्य च पञ्चानामश्विभादीनाम् ॥ ६४ ॥** [IV. 24]

माषस्विन्नोत्करोऽश्विन्यां भरण्यां तिलतण्डुलाः ।
दध्योदनं कृत्तिकासु गव्यं वा दधि केवलम् ॥ ६५ ॥

पार्षतं पिशितं प्रोक्तं रोहिण्यामेव माषकम् ।
सौम्ये मार्गं भवेन्मांसमर्थतोपहरेद्बुधः ॥ ६६ ॥

अश्विनीयोगयुक्ते तु निर्गच्छेन्मेदिनीपतिः ।
राजमाषशतं प्राश्य राजतुल्यफलं भवेत् ॥ ६७ ॥

**रुधिरबिलायनवायसभुजङ्गमांसानि शङ्करादीनाम् ।**
**पित्र्ये तिलौदनं षाष्टिकान्नमृक्षद्वये परतः ॥ ६८ ॥** [IV-25]

प्राश्याः प्रियङ्गुचित्राण्डजफलानि यावकं कुलत्थाश्च ।
मधुसर्पिषी च हस्तामूलान्य[म्बूनि]सक्तवो मूलातम(?) ॥ ६९ ॥
[IV. 26]

श्रवणादीनां षण्णां शालिशाकं विलाळमांसश्च ।
आजं यथेष्टमांसश्च सक्तवो माषसंवृताः ॥ ७० ॥ [IV. 27]

आस्वादु च्युतकचमक्षिकानुविद्धं
दुर्गन्धि क्षयकृदभूरि यच्च दग्धम् ।
सुस्विन्नं मृदु रुचिरं मनोनुकूलं
स्वाद्वन्नं बहु च जयाय यानकाले ॥ ७१ ॥ [IV.29]

गुणवति तिथावृक्षेऽनिष्टे दिवा गमनं हितं
निशि च भगणे शस्तं यानं तिथौ गुणवर्जिते ।
भतिथिगदितान् दोषान् प्राप्नोत्यतः प्रतिलोमगः
गुणमपि तयोस्सम्यक् यातुर्जगाद भृगुर्मुनिः ॥ ७२ ॥
[IV.30]

तिथिश्चतुर्थी नवमी चतुर्दशी विवाहमिष्टिं करणञ्च गच्छेत्(?) ।
भवन्ति चामीकरवाजिकुञ्जराः चतुर्थपूर्वाश्च तथा विघारणात् ॥ ७३ ॥

नक्षत्रे यात्रिके शुद्धे तिथौ च गुणसंयुते ।
याता धनानि लभते विपरीते विपर्ययः ॥ ७४ ॥

इति यक्षेश्वमेधीययात्रायां नक्षत्रविज्ञानाध्यायः
चतुर्थस्समाप्तः ॥

शुभमस्तु ॥

---

# INDEX 1 (BṚHADYĀTRĀ)

---

## INDEX II (YAKŚĀŚVAMEDHĪYĀ-YĀTRĀ)

